व्याख्येयं । तथात्वे श्वपचादीनां सर्वेषामपि विभूतिरूपत्वप्राप्त्या वंद्यतापत्तेः । नन्वेकं रूपं स्वसन्निधानेन सजातीयश्रैष्ठ्यसंपादकमपरं बहिष्ठमित्युक्ते बहिष्ठस्य स्वसन्निधानेन सजातीयश्रैष्ठ्यसंपादकत्वाभावप्राप्त्या भगवद्रूपयोर्भेदापत्तिरित्याशंकां स्पष्टदृष्टांतोक्त्या परिहरति ॥ यथेति । दुष्टानां दुर्योधनादीनां हंतेत्युच्यते । वस्तुतः कृष्णेनैकरूपेऽप्यत एवासमोऽपि । पाण्डवेष्वेव स्नेहसद्भावात् । कौरवपाण्डवपक्षयोरसमोऽपि व्यासात्मनोभयोरपि सम इत्युच्यते । लोकदृष्ट्येत्यर्थः । अभिन्ने कथमेवंभाव इत्यत उक्तं ॥ सामर्थ्यादिति । अघटितघटकशक्त्येत्यर्थः । तथा च तथा व्यासे दुष्टहर्तृत्वसद्भावेऽपि कृष्णेऽपि समत्वसद्भावे यथा भेदेन व्यवहारस्तथा विभूतिरूपयोरपीति भावः । ननु स्वस्वजात्युत्तमत्वमित्यादिनोक्तं भगवद्रूपस्यैव विभूतिरूपत्वमयुक्तं । देवानामस्मि वासवः । रुद्राणां शंकर इत्यादाविंद्ररुद्रादिजीवानामेव कृष्णेन विभूतिरूपताया एवोक्तत्वादित्यतस्तत्तात्पर्यमाह ॥ ब्रह्मेति । व्यवस्थितं ब्रह्मादिजीवेषु। तद्गत ब्रह्मादिगतं यच्छ्रैष्ठ्यं तस्य मुख्यतः कारणं । अंजसा मुख्यया वृत्त्या । तदेव विभूतिरूपं तदेव ब्रह्मादिस्थित यच्छब्दवाच्यं रूप तदेव । गतिर्गतिमतामित्येतत्क्रियावतां क्रियेत्यसंगतिपरिहाराय व्याचष्टे ॥ गतिरिति । तथा च गतिमतां ज्ञानवतां पुंसां विद्यमाना ये गुणा भक्त्याद्यास्तेषां मध्ये गतिर्ज्ञान ज्ञानाख्यो गुणः श्रेष्ठस्तच्च ज्ञानमहं ज्ञानस्थं ज्ञाननामकं तस्य सजातीयश्रैष्ठ्यापादकं मम विभूतिरूपमंतर्यामिरूपातिरिक्तं तस्मिन्नस्तीत्यर्थः । तथा कलयतां संहारकारणानां कालकर्मादृष्टानां मध्ये कालः श्रेष्ठः स च कालोऽहं कालस्थं कालनामकं संहर्तृत्वेन स्वस्वजातीयकर्माद्यपेक्षया श्रैष्ठ्यापादकं मम विभूतिरूपमस्तीति योज्यमित्येवं जडेष्वपि स्वरूपोत्तमत्वपरतया व्याख्येयं । जडेष्वपि स्वरूपोत्तमत्वस्य स्पष्ट भाष्यादावुक्तत्वात् । तथा हि । भाष्ये ॐकाराथशब्दप्रयोगनियत्या किं प्रयोजनमिति शंकापरिहाराय स्वरूपाधिक्यं चास्तीत्युच्यते । सिसृक्षोः परमाद्विष्णोः प्रथमं द्वौ विनिसृतौ । ॐकारश्चाथशब्दश्च तस्मात्प्राथमिकौ क्रमादिति । व्याख्यात च तत्वप्रकाशिकायां । प्रथमं निःसृतावतः स्वरूपोत्तमौ । यस्त्वजातौ प्रथम हरेर्निःसरति तत्तत्रोत्तममिति न्यायोऽत्रानुसंधेय इति । तथा चैवं स्पष्टं जडेषु स्वरूपोत्तमत्वस्य प्रतिपादनादिमं प्रकारं विहाय जडेषूत्तमत्वादेरभावाच्चेतनेष्वेव तस्य भावादभिमानिविवक्षाऽऽवश्यकीति ज्ञानाद्यभिमानिनं दर्शयति । प्रधान इतीत्यवतार्य व्याख्यानमसांप्रदायिकमित्युपेक्ष्यं । तस्मादित्थमवतार्य । न केवलं जडेष्वेव

स्वरूपोत्तमत्वापादकं विभूतिरूपमस्तीति गतिरित्यादेर्व्याख्यानं । किं नामाभिमानिविवक्षया प्रकारांतरेणापि योजना कार्येति प्रमाणेनाह ॥ प्रधान इति । ज्ञानिनां हृदिस्थितः । ज्ञानिनां यज्ज्ञानं तदभिमानी यो ब्रह्मा स प्रधानो ज्ञान्युत्तमः । ज्ञानिना-मिति गतिमतामित्यस्यार्थः । ज्ञानमानीत्युक्त्याऽभिमान्यधिकरणन्यायेन ज्ञानशब्दो ब्रह्मणि मुख्य इति सूचित । स एव ब्रह्मैव कालमानीति काल शब्दस्य ब्रह्माणि प्रवृत्तौ निमित्तं । कलयतामित्यस्यार्थः ॥ संहर्तॄणामिति । तथा च गतिमतां ज्ञानिनां मध्ये गतिर्ज्ञानं ब्रह्मा श्रेष्ठः । सा च गतिः । अह ब्रह्मस्थं ब्रह्मनामकं तस्य सजातीयश्रेष्ठ्यापादक मम विभूतिरूपमस्तीत्यर्थः । तथा कलयतां संहर्तॄणां यमादीनां मध्ये कालो ब्रह्मा श्रेष्ठः । स च कालोऽहं । कालनामके ब्रह्मणि स्थितं तन्नामकं तद्गत-श्रैष्ठ्यापादक मम विभूतिरूपमत्रास्तीत्यर्थो द्रष्टव्यः । गुणानामप्यहं सौम्यमित्युक्तसौम्य शब्देन को गुणः कथ्यत इति न प्रती-यतेत्यत आह ॥ आनदेति । उम इत्युच्यते । कथमित्यत आह ॥ उत्कृष्टेति । उत्कृष्टस्यानुभवत्वादित्यर्थः । उ शब्द उत्कृष्ट-वाची । सर्वपदार्थानां मध्ये आनंदस्यैवोत्कृष्टत्वेन योग्यतयाऽऽनदस्येति सबधः । म शब्दो माङ् मान इत्यनुभववाची । तथा चोत्कृष्टस्यानंदस्यानुभव उमस्तद्युक्तः पुमान् सोमस्तद्युक्तत्वं तस्य भाव इत्यर्थः । तस्यानंदानुभवयुक्तस्य भावो धर्मः । आनं-दानुभव एव ससौम्य तद्गुणानां भक्त्यादीनां मध्येऽधिकमित्यर्थः। नन्वत्र सर्वगुणापेक्षयाऽधिकतयोच्यमान आनंदानुभवः को विव क्षितः । न तावद्वैषयिकः । तस्य भक्त्यादिगुणोत्तमत्वस्य बाधितत्वात् । नापि मौक्तः । वक्ष्माणान्वयव्यतिरेकयोस्तत्र बाधितत्वादिति चेत् । उच्यते । अस्त्यत्र संप्रदायविशेषः । स्वस्य सद्गुरूपसंपत्त्या तदुपदेशेन भगवद्भक्तिसदाचारादिसद्गुणसंपत्तौ सत्यां मम सद्गुरुसप त्त्यादिना भक्त्यादिकं मया प्राप्तमतः पर मम मोक्षो भविष्यत्येव । मदीयं जन्म जन्मांतरीयं पुण्यमद्य फलितमित्येवं संतोपविशेषवान् भवति ।स आनंदानुभवोऽत्र गुणोत्तमतया सौम्य शब्देन विवक्षितः । एतादृशानदानुभवस्योत्तमत्वमन्वयव्यतिरेकाभ्यामुच्यते ॥ भक्त्या दीति । भक्त्यादिगुणानां पूगः समूहो निष्फलोऽमोक्षफलकः । प्रत्युतांधतमः फलकश्च भवति । कदा दुःखहेतुत्वभावनान्मम सद्गुरुसं-पत्त्या भक्त्यादिकं मया लब्धमित्येवं संतोपं विहाय कुत्रत्योऽयं गुरुर्मया प्राप्तस्तदुपदेशेन प्राप्तं स्नानादिसदाचारभक्त्यादिकमतीवदुः खहेतुभूतं कुत्रत्यो मोक्ष इत्येवं भक्त्यादिगुणपूगस्य दुःखहेतुत्वभावनात् । निष्फलो भवति । प्रीतस्योक्तसंतोपविशेषयुक्तस्य सफलो

भक्त्यादिगुणपूग इति वर्तते। उपसंहरति॥ तस्मादिति। एवं भक्त्यादिगुणपूगस्य संतोषापरपर्यायानंदानुभवराहित्ये निष्फलत्वदर्शनात्। तत्साहित्ये सफलत्वदर्शनादित्यर्थः। आनदमान आनंदस्य मानमनुभवः। मानं ज्ञानं लयश्चेति मर्यादा चापि कथ्यत इत्यभिधानात्। तथा च गुणानां भक्त्यादिगुणानां मध्ये सोम्यमानंदानुभवरूपोगुणश्रैष्ठ्यस्तच्चाहं तस्मिन् गुणे स्थितं तन्नामकं तस्य सजातीयश्रैष्ठ्यापादकं मम विभूतिरूपं तत्रास्तीति योज्य। एवं जडेपूत्तमत्वाभिधायकतापरतया मूलं योजित्वाऽभिमानिपरतयाऽपि योजनां प्रमाणशेषेणाह॥ तस्येति। आनंदानुभवरूपगुणस्य श्रद्धाभिमानिनी सरस्वती देवी तथैव श्रद्धाया इव भक्तिज्ञानादिकस्य चाभिमानिनीति योज्यं। तदन्येषां भक्त्यादिव्यतिरिक्तशमदमादिगुणानां। तदन्ये सरस्वत्यन्ये। उपसंहरति॥ गुणानामिति। तस्मादित्यादौ योज्यं। गुणानामभिमानिन्येव शब्दस्य मुख्यत्वात्सरस्वतीविबुधानामित्यर्थः। तथा च गुणानां तदभिमानिसरस्वतीविबुधानां सकाशात्सौम्यं तद्गुणाभिमानी ब्रह्मोत्तमः। तच्चाहं ब्रह्माणिस्थ ब्रह्मनामकं तस्य सजातीयश्रैष्ठ्यापादकं मम विभूतिरूपं तस्यास्तीत्यर्थः। गुणिन्यौत्पत्तिको गुण इत्यत्रौत्पत्तिकगुण शब्दार्थमाह॥ औत्पत्तिक इति। शुभो भक्त्यादि। तथा च गुणिनीत्यत्रापि गुणानामित्यनुवर्तते। गुणिनि विद्यमानानां गुणानां मध्ये औत्पत्तिको गुणो योग्यतारूपो गुणः श्रेष्ठः। स चाहं तस्मिन् गुणे स्थित तन्नामकं तस्य श्रैष्ठ्यापादक मम विभूतिरूपं तत्रास्तीत्यर्थ उक्तो भवति। अभिमानिविवक्षया योजनानंतरं सूचयति॥ तस्येति। योग्यतारूपगुणस्य। स हि प्राणः सर्वैर्गुणैरधिकः सर्वापेक्षया गुणैरधिक इति वा। विवक्षापक्षे प्रामाणेन योजनां सूचयित्वा स्ववाक्येन स्पष्टं दर्शयति॥ गुणानामिति। तथा च गुणानामित्येतदत्राप्यन्वेतीति सूचितं। सूत्रं प्राणः। तथा च गुणानां तदभिमानिविबुधानां मध्ये गुणिनि स्थित औत्पत्तिको नाम यो गुणस्तदभिमानी सूत्रनामको वायुः स श्रेष्ठः स चाह तत्र स्थितं तन्नामक तद्गतश्रैष्ठ्यैककारणं मम विभूतिरूपं तत्रास्तीति योज्यं। अस्यां योजनायां प्रमाणमाह॥ गुणानामिति। गुणानां मध्ये सर्वगुणिषु स्थितं यद्गुणयोग्यत्वं गुणः शुभधर्मस्तद्योग्यत्वं तत्प्रतियोग्यत्वं। शुभप्राप्त्यैकयोग्यतारूपो गुण इति यावत्। तदभिमानी वायुरित्यर्थः॥ ९॥ १०॥ गुणिनामप्यहं सूत्रमित्यस्य तात्पर्यमाह॥ सर्वगुणीति। सर्वे ये गुणिनस्तेष्वधिक इत्यर्थः। तथा च गुणीति पदमध्याहार्यं। गुणिनां गुणवतां मध्ये यो

गुणी स सूत्रं वायुरूपो गुण्येव । श्रेष्ठ इति यावत् । तच्च सूत्रमहं तत्रत्यं तन्नामकं तस्य सजातीय गुण्यपेक्षया श्रैष्ठ्यापादकं मम विभूतिरूपं तत्रास्तीत्यर्थः । पूर्वं गुणाभिमानित्वेन श्रैष्ठ्यमुक्तमिदानीं गुणित्वेनेत्यपौनरुक्त्यं । ननु ब्रह्मण एकत्वेन रूपांतराभावात्कथं बहुस्थानेषु प्रधानोक्तिरित्यत आह ।। रूपांतरत्वादिति । अनेकरूपत्वादित्यर्थः । एकस्यापि ब्रह्मणो बहुस्थानेषु गतिकालादिषु । रूपांतरत्वमनंगीकृत्यापि समाधानांतरमाह ।। गुणांतरेति । एकस्यापीत्यादिकमनुवर्तते । पूर्वोक्तगतिमानित्वरूपगुणापेक्षया यद्गुणांतरं कालादिमानित्वरूपं तस्योत्तरत्रोक्तेरविरोध इत्यर्थः । दृष्टांतमाह ।। राम इति । यथा रामस्य प्राधान्यमुक्त्वा वासुदेवादिप्राधान्योक्तौ विरोधो नास्ति । रूपांतरत्वात् । शस्त्रभृच्छ्रेष्ठत्ववृष्णिपतित्वादिगुणांतरोक्तस्तद्वदित्यर्थः । इत्यादीत्यादि पदेन सिद्धेश्वराणां कपिलद्वैपायनोऽस्मि व्यासानामित्यादिग्रहणं । महतां स्थूलानां मध्ये महान्महत्तत्त्वं श्रेष्ठं । तच्चाहं तन्नामकं मद्रूपं श्रैष्ठ्यापादकमस्तीत्यर्थः । सूक्ष्माणां पदार्थानां मध्ये जीवोऽतिसूक्ष्मः श्रेष्ठः स चाहमित्यादिरुक्तरीत्याऽर्थो मंतव्यः । दुर्जयानां मनः श्रेष्ठं तच्चाहं । हिरण्यगर्भः श्रेष्ठः स चाहमित्युत्तरत्र सर्वत्रानुवर्तते । मंत्राणामित्यादावुक्तरीत्या योजना कार्या । त्रिवृत्त्रीन् अकारोकारमकारान्वृणोतीति त्रिवृत् । पदानि छंदसामहमित्यत्र वेदानां सकाशाद्विभक्त्यंतवर्णात्मकप्रसिद्धपदानामुत्तमत्वं प्रतीयते तत्प्रमाणविरुद्धमतो व्याचष्टे ।। पदानीति । छंदसां वेदानां । सकाशादिति शेषः । ननु वाच्यवाचकयोः सजातीयत्वाभावात्स्वस्वजातीत्युत्तममित्युक्तं । सजातीयोत्तमत्वसंपादक विभूतिरूपमत्र न संभवतीत्यतोऽत्र विभूतिरूपास्थितिमाह ।। स्वयूथ्यानामिति । यद्विष्णो रूपं कारणं तद्रूप विभूत्याख्यमुच्यते इति योज्यं । तथा च वाच्यवाचकयोरेकयूथत्वात्स्वयूथे आधिक्यापादक विभूतिरूपं वाच्येऽस्तीति भावः । सर्ववेदापेक्षया पदानामेवोत्तमत्व कस्मान्न स्यादित्यतस्तारतम्यज्ञापकं प्रमाणमाह ।। वर्णेशानीत्यादिना । ननु पदानि वाच्यानीति व्याख्यातं । तत्कया व्युत्पत्त्येत्यतः कर्मव्युत्पत्त्येत्याह ।। पद्यत इति । ननु पदस्य विभक्त्यंत वर्णेष्वेव रूढत्वात्कथमिदं व्याख्यानमित्यतो रूढ्यैतदर्थपरित्यागेनार्थांतरग्रहणस्यापि क्वचिद्दर्शनात्तद्वत्प्रकृतेऽपि रूढ्यैतदर्थपरित्यागेनार्थांतरग्रहण युक्तमित्याशयेनाह ।। पद पदसहस्रेणेति । युद्धप्रसंगे शरवर्णनं भारते क्रियते ।। पदमिति । अत्र पदशब्दो लक्ष्यवाची । एकमपीति शेषः । तथा पदसहस्रेण लक्ष्यसहस्रेण चरन्

सहस्रसंख्याकं लक्ष्यं विद्धयन् । शुर इति यावत् । एकमपि पदं तन्मध्ये । एकमपि लक्ष्यं नापराध्यति नाविद्धयदिति न किं त्वविद्धयदेवेत्याशयः । एवं चात्रप्रयोगे पद शब्दस्य प्रसिद्धार्थपरित्यागेन यथा लक्ष्यार्थकत्वं तद्वत्प्रकृतेऽपि रूढ्यार्थ-परित्यागेन वाच्यार्थकत्वं । रूढार्थनैय्यत्याभावादित्याशयः । यच्छब्दस्योत्तरेणान्वयः । पदसहस्रेण वाचकसहस्रेण पद वाच्यं चरन् उच्चारयन्निति व्याख्याने इतिवदिति वैयर्थ्यं द्रष्टव्यं । एवं प्रयोगेण पद शब्दो वाच्यपर इत्युक्त्या रूढ्याऽपि वाच्यवाचक-इत्याह ॥ पद त्विति । तथा च छंदसां सकाशात्पदानि वाच्यानि उत्तमानि तत्र तन्नामकं तेषां स्वपृथ्याधिक्यापादकं मम विभूतिरूपमस्तीत्यर्थः । किं तद्वाच्यं वाचकं चेत्यतस्तद्दर्शयति ॥ सर्वेति । वर्णादिकमारभ्य शाखावेदपर्यंतमिति सर्वेत्यर्थः । देव्यो देवतास्त्रियो भारताद्याः । किं तल्लक्ष्मीरूपमित्यत आह ॥ वेदेति । विष्णोः सकाशाद्दूरवादिति । भगवत्समीपे स्थित्वा जय जय जह्यजामित्यादिना बंदीभूता सती स्तोत्रकर्त्री यतोऽतो दूरवदित्यर्थः । युक्ता यदाऽहं तेन नारायणेनेत्युक्त यज्ञ शब्द-निर्वचनं सूचयाति ॥ विष्णोस्त्विति । जहल्लक्षणयोरुशब्देनांकस्थलक्ष्मीग्रहणं तात्पर्यनिर्णयेऽकस्थितेति स्पष्टमकस्थितत्वोक्तेः । भग-वत्संबंधेत्यत्र वा तात्पर्यं । दक्षे इनो यस्याः सा दक्षिणेति । दक्षिणा शब्दतात्पर्यमाह ॥ हरिणेति । अर्धं नारायणरूपं भगव-दालिंगितमर्धनारीरूपमुक्तं भवति । भगवदालिंगनमपि रतिहेतुत्वाद्रतियोग एवेति भावः । सा लक्ष्मी उत्तरोत्तरतः सुखविषये विशिष्टा विशेषयुक्ता । बंदीभूतवेदाभिमानिलक्ष्मीरूपापेक्षया यज्ञनाम्नी सुखेऽधिका । तदपेक्षया दक्षिणा सुखेऽधिकेत्यर्थः । अत्रैतत्प्रमाणानुसारेण लक्ष्मीरूपेषु सुखविषय एव तारतम्यमस्तीति ज्ञायत इति संप्रदायविदः प्राहुः समाधान । अतःपरं मूलं योजयति ॥ एवमिति । एवं संतीत्यर्थः । तदर्थरूपा वेदार्थरूपाः पतयस्तद्भर्तार उत्तमा इत्यन्वयः । तस्यास्तस्या देव्याः सकाशात्स पतिरुत्तम इत्युक्तस्य विवरणं । एवं साम्येनाभिधाय विविच्यापि लेशतो दर्शयति ॥ शच्या इंद्र इति । तथा पदानि छंदसामहमित्यत्र यदा वर्णरूपवेदाभिमानिदेवीविवक्षा तदा तदपेक्षया वर्णवाच्यो देव उत्तमस्ततः पदानि पदाभिमानिनी देव्यु-त्तमा ततः पदवाच्यो देवदेव इत्यादिप्रकारेणोत्तमत्व द्रष्टव्यमिति शच्या इंद्र इत्यादेस्तात्पर्यमाहुः । अन्ये तु त्रिचतुर्वर्गविवक्षां कृत्वा योज्यं । तथाहि । वर्णपदपदाभिमानिशच्यपेक्षया तद्वाच्य इंद्र उत्तमः । तदपेक्षयाऽर्धचर्ग्वर्गाभिमानिन्युमोत्तमा । तद-

पेक्षया तद्वाच्यो रुद्र उत्तमः । तदपेक्षया सूक्ताध्यायाष्टकशाखाभिमानिनी भारत्युत्तमा । तदपेक्षया तद्वाच्यः प्राण उत्तमः । तदपेक्षया श्रीः । विष्णोः सकाशाद्दूरस्थिता सर्ववेदाभिमानिनी या सोत्तमा । तदपेक्षया तद्वाच्यो यज्ञदक्षिणाख्यलक्ष्मीरूपसहितो हरिरुत्तमः । अत्र यज्ञदक्षिणयोर्वेदवाच्यत्वमेव न वेदाभिमानित्वं । वेदाभिमानिरूपापेक्षया तद्वाच्या यज्ञाख्योत्तमा । तदपेक्षया दक्षिणोत्तमा । तदपेक्षया हरिरुत्तम इति वाच्येऽपि तारतम्यं ध्येयं । एवं लक्ष्मीरूपसहितस्यैव हरेर्वाच्यत्वमित्याशयेनैव यज्ञदक्षिणाख्य लक्ष्मीरूपद्वयं कथितं । अन्यथा तत्कथनमसंबद्ध स्यादिति मतव्यमित्याहुः ॥ ११ ॥ १२ ॥ इंद्रोऽहं सर्वदेवानां वीराणामहमर्जुनः कवीनां काव्य आत्मवान् । यमः सयमतां चाहमित्येतत्संकोचेन व्याख्येयं । अन्यथा प्रमाणविरोधादित्याशयेनाह ॥ ऋत इति । उमाया अपि रुद्र शब्देन संग्रहः । आदि पदेन गरुडशेषतत्स्त्रीवायुब्रह्महरितत्स्त्रीणां ग्रहण । भीममृत इत्युक्त्या पांडवानां धनजय इति गीतायां अपि तात्पर्यमुक्तमिति द्रष्टव्यं । हव्यवाडग्निः ॥ १३ ॥ मनुः स्वायभुवः । हविर्धानी कामधेनुः ॥ १४ ॥ १५ ॥ दैत्यानां मध्ये । नक्षत्रविवक्षया सोमश्चंद्र औषधिविवक्षया सोमलता । धनेशं कुबेरं ॥१६॥ यादसां जलचराणां । तपतां सतापकुर्वतां द्युमतां प्रकाशवतामिति सामानाधिकरण्यं ॥ १७ ॥ ताम्रादीनां धातूनां ॥ १८ ॥ नागेंद्राणां सर्पश्रेष्ठवासुक्यादीनां । तुरीयः सन्यासः । अत्र गार्हस्थ्यापेक्षया सन्यासाश्रमस्याधिक्ये ब्रह्माद्यपेक्षया सनकादेरुत्तमत्वं स्यादतः कृत्स्नाश्रमधर्मवतां देवानामपेक्ष्यैवेतत् । यथोक्तं । कृत्स्नभावात्तु गृहिणोपसहार इतीत्याशयेन तात्पर्यमाह ॥ गार्हस्थ्यमिति । एकत्वमेकाधिकरणत्वं । आगत प्राप्तं । उक्तिर्युज्यत इति शेषः । प्रथमो ब्राह्मणः ॥ १९ ॥ स्रोतसां नदीनां धनुर्वज्रं विनेति ध्येयं ॥ २० ॥ आयुधानामहं वज्रमित्यन्यत्रोक्तेः । त्रिपुरघ्नो रुद्रः । रुद्राणां नीललोहित इत्युक्तत्वेऽपि त्रिपुरघ्न इति पुनर्वचनं रूपांतरविवक्षयेति ध्येयं ॥ २० ॥ पुरोधसां वासिष्ठ इत्यत्र देवपुरोहितबृहस्पत्यपेक्षयाऽऽधिक्यप्राप्तेस्तात्पर्यमाह ॥ वसिष्ठ इति ॥ २१ ॥ सेनान्यां सेनापतीनां । सेनानीः सेनान्यो सेनान्य इतीकारांतस्य षष्ठीबहुवचनं । सेनानी आम् इति स्थिते यणादेशे सेनान्यामिति भवति । गीतायां सेनानीनामित्येतद्विचार्यं । एवमग्रण्यापि षष्ठीबहुवचनं श्रेष्ठानामित्यर्थः ॥ २२ ॥ शुचीनां शुद्धिकरवस्तूनां मध्ये वाय्वाद्यात्मा वाय्वादिरूपः शुचिः शुचिकरोऽहमित्यर्थः । वाय्वग्न्यर्कांबुभिः

शुचिः प्रसिद्धा । पूतो भवेदिति वाचा शुद्धः । विष्णुर्वैष्णववाक्येन हानिः स्यात्पापकर्मण इत्युक्तः ॥ २३ ॥ आत्मसंरोधो मनोनियमन । विजिगीषतां जेतुमिच्छतां । राजादीनां मन्त्रो गुह्योक्तिः । गुह्यविचारेणैव ते ते सर्वे । जयंतीति शपः । मंत्रः प्रधानं । आन्वीक्षिकी ब्रह्मतर्कादितर्कविद्या । कौशलानां शुभहेतूनां । विकल्प पदमनूद्य व्याख्याति ॥ जीवेति । ख्यातिरन्यथाख्यातिरित्यन्यथाप्रतीतिनिरासायानूद्यव्याचष्टे ॥ ख्यातीति । षोडशपदार्थतत्त्वज्ञानं मोक्षसाधनं । सप्तपदार्थज्ञानमेवयज्ञानं भेदज्ञान मोक्षसाधनमित्येवं ज्ञानमेव मोक्षसाधनमिति वादिनां मध्य इत्यर्थः । अत्र प्रमाणमाह ॥ जीवेति । विशेष भेद । प्रकल्पयंज्जानीयात् । जीवेशादीत्युक्तं विशदयति ॥ कलिमिति । आविष्णोः विष्णुपर्यंतं । जीवेशादिविशेषभेदं कल्पयति । जानातीति विकल्पको ज्ञानीत्यर्थः । न हेयो नोपेक्ष्यः स ज्ञानी भेदज्ञानी । मोक्षहेतुत्वेन भेदज्ञानमेव सर्वज्ञानाधिकमिति भागवत एव पूर्वोत्तरग्रंथपर्यालोचनया सिद्धमित्याह ॥ भेदेति । उक्त तृतीये । का विद्येत्युद्धवेन पृष्टे सत्यात्मनि भगवति जीवादिभ्यो भिदाबोध एव विद्येति अत्रैव स्कंधे एकोनविंशतिमेऽध्याये भगवान्वक्ष्यतीत्यर्थः । न च भिदाया अबोध इति व्याख्येयं । विरोधेनाज्ञानस्य विद्यात्वायोगादिति भावः ॥ २४ ॥ स्त्रीणां त्वित्यत्र शतरूपायाः शच्याद्युत्तमत्व प्राप्नोतीत्यतः सकोचेन व्याख्येयमिति प्रमाणेनाह ॥ शतरूपेति । नारायणो नरनारायणः । कुमारः सनत्कुमारः ॥ २५ ॥ संत्यागः काम्यनिषिद्धत्यागः । मोक्षाणां मोक्षसाधनानामबहिर्मतिर्बहिर्मत्यभावः । भगवज्ज्ञानमिति यावत् । मिथुनानां सामान्येन स्त्रीपुरुषाणां मध्ये ॥ २६ ॥ अनिमिषां क्षणादिकालानां मधुमाधवौ चैत्रवैशाखौ वसंततुरित्यर्थः । उत्तराषाढान्त्यचरणः श्रवणस्य पूर्वचरणश्चाभिजिदित्युच्यत इत्याहुः ॥ २७ ॥ व्यासानां वेदविभागकर्तॄणां द्रौण्यव्यासादीनामात्मवान्कविज्ञानी । काव्यः शुक्रः ॥ २८ ॥ भगवतां मत्स्यादीनां मध्ये वासुदेव इति कृष्णस्य श्रैष्ठ्यमुच्यत इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे ॥ ऐश्वर्यादीति । सामग्र्यात्समग्रत्वात्पूर्णत्वादित्यर्थः । साक्षादनुपचारेण । कुत इत्यत आह ॥ निरपेक्षामिति । इति प्रमाणमस्ति । यतोऽतो भगवतां देवादीनामिति व्याख्येयमित्यर्थः । भागवतेषु त्वमधिकस्त्वं चाहमित्यत्रोद्धवस्यैव ब्रह्माद्यपेक्षयाऽऽधिक्यप्रतीतिनिरासाय संकोचेन व्याख्येयमित्याशयेन तारतम्यज्ञापकं प्रमाणमाह ॥ सर्वेति । जिष्णुरर्जुनः । भीमस्य सर्वाधिक्यमुद्योगपर्वगतवाक्यसमंत्याऽपि द्रढयति ॥

यत्किंचिदिति । पांडवानामज्ञातवासानंतरं कृष्णेनागत्य युद्धं कार्यं संधिः कार्यो वेति पृष्टे धर्मराजादिभिः संधिरेव कार्य इत्युक्ते भीमेनापि तथैवोक्ते पृष्टतो युद्धादिकं कार्यमित्युक्त्वेदानीं युद्धे उपस्थिते संधिः कार्य इत्युच्यते तस्माद्भीतोऽसीति कृष्णेनोक्ते स्वामिंस्तव प्रसादादिदं ब्रह्मांडमपि करद्वयेन धृत्वा नारिकेलवद्द्विधा कर्तुं समर्थोऽस्म्येतेषां हननं चातितुच्छमिति भीमसेनेनोक्ते भगवतोच्यते । कल्याणं मंगलं रूपं बलादिकं त्वय्यायत्तं त्वदधीनं ॥ २९ ॥ पेशसां कुड्मलानां गव्यमाज्यं गोघृतं ॥ ३० ॥ व्यवसायिनामुद्योगवतां लक्ष्मीप्रद उद्योगः । कितवानां कपटिनां दिव्यतां छलेन कापट्येन गृह्यतेऽनेनेति प्रतिवादीति छलग्रहो द्यूतं सत्त्वं बलं ॥ ३१ ॥ सहोबलवतामोजोऽवष्टंभशक्तिः । सात्वतां । सात्वत् सात्वतौ सात्वत इति सात्वच्छब्दस्येदं षष्ठीबहुवचनं । पंचरात्रोक्तप्रकारेणानुष्ठातॄणां कर्म तेषां कर्मानुष्ठानमेव प्रधानं तदहमित्यर्थः । यद्वा । सात्वतां पंचरात्रोक्तधर्माणां मध्ये कर्मप्रधानं तदहमित्यर्थः । सात्वतानामित्येतदप्रतीतेर्व्याख्यातुमाह ॥ विष्णोरिति । सात्वततंत्रेषु पंचरात्रागमेषु हरेराद्या नवमूर्तयः । ननु हरेर्नवमूर्तित्वे आदिमूर्तिरित्येकवचनं कथमित्यत आह ॥ अभेदादेवेति । स हरिः । एवं प्रमाणमभिधाय स्ववाक्येन व्याचष्टे ॥ श्रियादीति । आदि पदेन भगवन्नवमूर्तेरपि ग्रहणं । तेन मध्य इति युक्तं । सात्वतां पंचरात्रोक्तानां श्रियादिनवमूर्तीनां मध्य इत्यर्थः । आदिमूर्तिरित्यस्यार्थः ॥ स्वकीयेति । ननु कुत एवं व्याख्येयं सात्वता तव मूर्तीनां स्वकीय तव मूर्तीनां मध्ये या आदिमूर्तिर्नारायणसंज्ञा सोऽहमित्यर्थः कस्मान्न स्यादित्यतः प्रमाणविरोधान्नैवं व्याख्येयमित्याह ॥ स्वरूपत इति । विष्णोर्नवमूर्तीनां स्वरूपत इत्यादिसंबंधः । विष्णोर्नवमूर्तीनां पूजा नवधा । एकैकस्या मूर्तेरेकैका पूजेति नवधा । इति च प्रमाणं यतोऽतो न स्वनवमूर्तीनामिति व्याख्येयमित्यर्थः । पुरेत्यस्यानिवर्त्याशंकां प्रदर्शयन्व्याचष्टे ॥ अन्येभ्य इति । सुपर्णादिनवमूर्तिभ्योऽन्यनवमूर्तीनां श्रियादिनवमूर्तीनामात्मनः स्वस्य सन्निधानमित्यन्वयः । अस्तीति हेतोस्तेषामेवात्र ग्रहणमिति शंकापरिहारायेत्यर्थः । अयं भावः । अत्र नवमूर्तीनां संकर्षणादिनवमूर्त्यपेक्षया याऽऽदिनवमूर्तिर्ब्रह्मणो नवमूर्तिस्तदपेक्षया याऽऽदिमूर्तिः श्रियो नवमूर्तिरिति योजयितुं शक्यते आदिमूर्तिरहमित्येतदपि योजयितुं शक्यते । संकर्षणादिनवमूर्त्यपेक्षया ब्रह्मादिनवमूर्तिष्वधिकसन्निधानसद्भावात् । सत्यं । एषाऽपि योजनाऽभिप्रेतेति । तथाऽप्येवमेव न योज्यमित्या

शयेन पुरेत्युक्तामिति । कस्तस्यार्थ इत्यत आह ॥ प्रथममिति । ननूक्तयोजनायामपि श्रियादिनवमूर्तेरपि ब्रह्मादिनवमूर्त्यपेक्षया प्रथमं पूज्यत्वमस्तीति चेत् । सत्यं । तथाऽपि श्रीनवमूर्त्यपेक्षयाऽपि प्रथमपूज्यताया अत्राभिप्रेतत्वात् । तथा च सात्वतां नवमूर्तीनां श्रियादिनवमूर्तीनां मध्ये याः पुरा श्रियो नवमूर्त्यपेक्षयाऽपि प्रथमपूज्याऽऽदिमूर्तिः स्वकीयनवमूर्तयस्ता अहमिति मूलं योऽज्यं । नवमूर्तीर्विविनक्त्याह ॥ नारायण इत्यादिना ॥ धनजयेति । प्राणापानव्यानोदानसमानाः पंच नागकूर्मकृकलदेवदत्तधनंजयरूपपंचकमूर्तीनां मध्ये धनजयमृते चतस्रो मूर्तयो ग्राह्याः । एवं सति नवेत्यर्थः ॥ ३२ ॥ गंधर्वाणां विश्वावसुरप्सरसां पूर्वचित्तिः । ननु भूधराणामहं स्थैर्यं शब्दोऽहं नभसः परः । गंधमात्रमित्यादौ सजातीयश्रैष्ठ्यापादकविभूतिरूपासंभवात्कथमेतदित्यतस्तात्पर्यमाह ॥ यस्येत्यादिना । यस्य यस्य वस्तुनो यः स्वभावस्तस्य स्वभावस्य नियामको हरिस्तत्तन्नामतः शब्दादिनामवानित्यर्थः । धर्मिनियमनानुबद्धमेव धर्मनियमनमतो धर्मिनियामकं रूपमेव तन्निष्ठासाधारणधर्मनियामकं न तु तस्य वस्तुनो यः स्वभावभूतोऽसाधारणधर्मस्तन्नियामकं रूपं पृथगस्तीति शंक्येत । तन्निरासाय शब्दादेराकाशादिस्वभावत्वरूपासाधारणधर्मत्वप्रदं । तत्रात्यंतनियामकरूपांतरमप्यस्तीत्याशयेनायं ग्रंथः प्रवृत्त इत्याशयः । ननु सजातीयश्रैष्ठ्यापादकविभूतिरूपव्यतिरिक्तमिदं कुत्र विभूतिरूपमित्यत आह ॥ वैशेष्याख्येति । सजातीयश्रैष्ठ्यं वैशेष्य तदापादकेत्यर्थः । स्वभावजा जनी प्रादुर्भावे स्वभावे नियामकतया प्रादुर्भूता सती विद्यमानेत्यर्थः । स्थैर्यं स्थैर्यरूपासाधारणस्वभावप्रदः । गंधमात्रं गंधाख्यविषयः ॥ ३३ ॥ तेजिष्ठानामर्चिष्मतां विभावसुरग्निः । सूर्यादीनां प्रभारूपस्वभावोऽहं । नभसः शब्दस्तद्रूपः स्वभावः पर उत्तमोऽहमेव ॥ ३४ ॥ ब्रह्मण्यानां ब्राह्मणेषु साधूनां स्थित्यादिस्वभावस्तद्रूपासाधारणधर्मः । प्रतिसंक्रमः प्रलयः ॥ ३५ ॥ इंद्रियाणां गत्यादिसाधनत्वरूपस्वभावप्रदोऽहमित्याशयेनाह ॥ गतीत्यादिना । पादवागपानहस्तोपस्थत्वक्रसनश्रोत्रघ्राणनामैते विषयाः । लक्षणमेतद्रूप विद्धीत्यर्थः । एवं सर्वेंद्रियाणामिंद्रियं । गत्यादिसाधनत्वशक्तिप्रदोऽहं ॥ ३६ ॥ अहमहंकारतत्त्व । असच्छब्दरूपं वा । विकारो ब्रह्मांड । अव्यक्तमचेतनप्रकृतिः । परोहमिति संबंधः । अत्र पृथिवीसत्त्वाद्यभेदप्रतीतेस्तात्पर्यमाह ॥ सत्वादीति । तन्नाम जीव इत्यादिनाम । अनेन सूक्ष्माणामप्यहं जीवः । मयेश्वरेण जीवेनेत्यत्र हरौ जीव शब्दप्रवृत्तौ

निमित्तमंतर्यामित्वमुक्तं भवति ॥ ३७ ॥ एतेषामव्यक्तादितत्त्वानां प्रकर्षेण संख्यानं यस्मात्ज्ञानावद्भाति तदेतत्प्रसंख्यान तत्त्वनिश्चयो ज्ञानं तत्त्वनिश्चयरूपं यत्ज्ञानं तदहं । तत्त्वसंख्यानसाधनं ज्ञानं ज्ञानानां मध्ये प्रधानमित्यर्थः । न तदस्ति विना यत्स्यान्मया भूत चराचरमित्युक्तं गीतायां तदाह ॥ मयेति । ईश्वरेण जीवांतर्यामित्वाज्जविशब्दवाच्येन गुणेन गंधादिगुणनियामकरूपेण गुणिना पृथिव्यादिनियामकरूपेण ॥ ३८ ॥ सर्वात्मना सर्वांतर्यामिणा । सर्वत्र व्याप्तत्वात्सर्वशब्दवाच्येन मया विना क्वचिद्देशे काले वा भावः पदार्थो न विद्यते . सर्वत्राहमेव स्थित इत्यर्थः ॥ ३८ ॥ नांतोऽस्ति मम दिव्यानां विभूतीनामिति गीतोक्तमेवाह ॥ सख्यानमिति । अत्र परमाणूनां महता कालेन यद्यपि क्रियते तथाऽपि विभूतीनां संख्यां कर्तुं न शक्यत इति प्रतीयते । तदयुक्तं । परमाणूनामनंतत्वेन तत्संख्याकरणे ईश्वरस्य भ्रांतत्वापत्तेरतो योजयति ॥ कालेनेति । कल कामधेनुरिति हि धातुः । अनंतानामित्येतदेव योज्यं । अत्र यथेत्यध्याहारः । यथाऽनतानां परमाणूनां कालेन न मया सख्यानं क्रियते । संख्याया असत्वादेव न तु विद्यमानसंख्याया एवाविज्ञानात् तथा कोटिशोंऽडानि सृजतो मे विभूतीनामनतानां संख्यानं न मया क्रियते । संख्याया असत्वादेव न तु विद्यमानसंख्याया अविज्ञानादित्यर्थः । अत्र प्रमाणमाह ॥ अनतमिति । अनंतं वस्तु अनंतमिति वेत्ति । अंतवद्वस्तु तथाऽतवत्त्वेनैव वेति । अनंतमनतमिति कुतो वेत्तीत्यत आह ॥ अनंतस्य विति । सर्वज्ञता न भवेत् । विपरीतज्ञानित्वं भवेदिति यावत् । उपसंहराति ॥ अनतमपीति । वास्त्विति शेषः । विशेषतोऽवांतरविशेषसाहित्येन । तत्र सार्वज्ञादिति हेतुः । न संख्यानमनंतेषु वेत्ति । कुत इत्यत उक्तं ॥ असख्यस्य सख्या कुतो हीति ॥ ३९ ॥ तथात्वे भ्रांतत्वं स्यादित्यनिष्टं सूचयति । यद्यद्विभूतिमत्सत्त्वं श्रीमदित्यादिगीतोक्तमेवाह ॥ तेज इत्यादि । सौभग शुभैकभागित्वं । शुभैकभागी सुभग इत्युक्तेः । भोग ऐश्वर्यादिकः ॥ ४० ॥ यत्र यत्र पदार्थेषु समेंऽशको मम विभूत्यशयुक्तः । उपसंहरति ॥ एता इति । मनोविकारा इत्यादिकमन्यथाप्रतीतिपरिहाराय व्याचष्टे ॥ यथेति । जीवादीनां नामादिकं । यथाऽस्येदं नामेति । येन प्रकारेण वाचाऽभिधीयते तथा त एते सर्वे शब्दाः । तेषु मनोविकारा मनसो विकारान्मुख्यतस्तेषां वाचका इति भ्रमात्प्रतीयंते न वस्तुतो यतोऽतः स्वतो मय्येव सर्वशब्दा मुख्यया वृत्त्या वाचकत्वेन वर्तंते ॥ ४१ ॥ तस्माद्वाचं मय्येव

यच्छ वाचा सर्वशब्दवाच्यतया मद्विषयव्यवहारमेव कुर्वित्यर्थः । मुख्यतः सर्वशब्दैश्च वाच्य एको जनार्दन इति व्यवहरंति यावत् । मनो मय्येव यच्छ मनसा मद्ध्यान कुर्वित्यर्थः । प्राणं चेष्टामिंद्रियाणि मय्येव यच्छ मदधीनतया चिंतय मद्विषयान्वा कुर्वित्यर्थः ॥ ४२ ॥ आत्मानमित्यत्र स्वात्मानमित्यन्यथाप्रतीतिर्व्याचष्टे ॥ आत्मानमिति । मय्येवेति प्रकरणप्राप्तत्वादुक्तं । परमात्मान मयि यच्छेत्यसंगतमित्यतो विवृणोति ॥ लक्ष्यत्वेन यच्छेति । मदुपलक्षितसर्वावताराभिन्नमात्मानं परमात्मानमात्मना मनसा प्रयत्नेन वा जीवाख्यशरस्य लक्ष्यत्वेन जानीहि । मनोद्वारा जीव परमात्मलग्नं कुर्वित्यर्थः । एव सति भूयोऽध्वने संसारमार्गाय न कल्पसे मुक्तो भविष्यसीत्यर्थः । यो वा इति श्लोकतात्पर्यमाह ॥ यो यतिरिति । वागादीनिति शेषः । तथा च यो यतिः प्रयत्नवान् । धिया बुद्धिपूर्वं वाङ्मनसी । समासांतविधिरनित्यः । वाङ्मनसी भगवति न संयच्छेत् । तस्या-मघटस्थितांबुवत्ज्ञानव्रतादिकं स्रवतीत्यर्थः । मनोविकारा इत्यादिसार्धश्लोकद्वयस्य प्रमाणेनापि तात्पर्यमाह ॥ वाङ्मन इत्या-दिना । अन्येषां यन्मुख्यवृत्त्याऽभिधेयत्वं तन्मनसो भ्रमादित्यन्वयः । तथाऽन्येषां मुख्यवाच्यतया । तथा यो वाङ्मनसी मयि न सन्नियच्छेत् । मनसा मुख्यशब्दवाच्यत्वं मम न जानीयात् किं त्वन्येषां जानीयादिति मूलयोजना सूचिता भवति । यथातथं ज्ञानं यथार्थज्ञान ॥ ४४ ॥ तस्मादिति श्लोकतात्पर्यमाह ॥ तस्मादिति । तद्धि करणं सः कृतिविशेषः । अत्र वागादीनां भगवति नियच्छन नाम तदधीनत्वेन चिंतनमेव । तत्किं साक्षाद्भगवदधीनत्वं वागादीनां चिंतनी-यमिति शंकायां न किंतु परंपरयेति भावेन श्रुतिमेव पठति ॥ यच्छेदिति । वाक् वागभिमानिनीमुमां मनसि तदभिमानिरुद्रे निय-च्छेत्तदधीनत्वेन चिंतयेत् । तन्मनोऽभिमानिरुद्रं ज्ञानात्मनि विज्ञानतत्त्वात्मिकायां सरस्वत्यां । महत्यात्मनि महत्तत्त्वाभिमानिनि ब्रह्माणि । शांते सुखपूर्णे वासुदेवे । लक्ष्मीद्वारेति ग्राह्य । तथा च मत्परायणोऽधिकारी मद्भक्तियुक्तया श्रुत्युक्तक्रमेण वागादी-न्मयि नियच्छेत् । ततोऽनंतरं परिसमाप्यते । संसार इति शेषः । मुक्तो भवतीति यावत् ॥ ४५ ॥ इति श्रीभागवतटिप्पण्यां षोडशोऽध्यायः ॥ ११—१६ ॥ ॥

॥ हरिः ॐ ॥ उद्धव उक्तार्थमनूद्य ज्ञातव्यार्थं पृच्छति ॥ यस्त्वयेति । त्वद्भक्तिरेव लक्षणं चिन्हं फलं यस्य स तथा

यो धर्मस्त्वयाऽभिहितस्तेनानुष्ठीयमानेन धर्मेण तत्स्वधर्मानुष्ठानेन । वर्णाश्रमाचारवता सर्वेषां द्विपदां वर्णबाह्यानामपि यथा त्वयि भक्तिर्भवेत् । तथाऽऽख्यातुमर्हसीत्यन्वयः ॥ १ ॥ २ ॥ मयोक्तो धर्म इदानीं प्राणिभिरनुष्ठीयतेऽतः किं मया वान्यमित्यत आह ॥ पुरेति । य धर्ममित्यन्वयः । परम एव परमकः । त्वयिभक्तेभ्य इत्येकं पदं । सप्तम्या अलुक् । त्वद्भक्तेभ्य इत्यर्थः ॥ ३ ॥ अंतर्भविता तिरोभूतः प्राक् । त्वयेति शेषः ॥ ४ ॥ ते सकाशादन्योऽस्य धर्मस्य वक्ता कर्ताऽविता रक्षकश्च न । ननु सत्यलोके ब्रह्मा वदिष्यतीत्य आह ॥ सभायामपीति । अत्र ब्रह्मणो धर्मप्रवचनेऽसामर्थ्यं प्रतीयतेऽतस्तात्पर्यमाह ॥ विनेति । ननु विष्णुप्रसादे सति सर्वोऽपि जनो वक्ष्यत्येवेत्यत आह ॥ तत्प्रसादेनेति । तथा च यत्र सभायां कला मूर्तिधरा प्रत्यक्षतो देहधारिण्यः सत्यः सेवंते तस्यां वैरिंच्यां विरिंचसंबंधिन्यां सभायामपि विष्णुप्रसादमृते धर्मस्य न वक्तेति योज्यं । कलाः कलाविद्या इत्यन्यथाप्रतीतिनिरासायानूद्य व्याचष्टे ॥ कला इति । प्राणादिषोडशकलाभिमानिन्यो देवता इत्यर्थः । आदिपद संगृह्य कलादेवताः षट्प्रश्नोपनिषदा दर्शयति ॥ स प्राणमिति । एषा श्रुतिः कर्मेति पुष्करः प्रोक्त उपानामाभिमानिनी । लोकाभिमानी पर्जन्यः स्वाहा वै मंत्रदेवता । तपोऽभिमानी वन्हिश्च वरुणो वीर्यदेवता । अन्नस्य देवता सोमो मनोनामानिरुद्धकः । इंद्रियेशाश्च सूर्याद्याश्चक्षुराद्यभिमानिनः । रुद्रो वींद्रः शेषकामौ मनसस्त्वेव देवताः । श्रद्धेति वायोः पत्नी स्यात्सर्वेषां प्रभवाप्ययौ । तस्याश्च कारणं प्राणः सर्वेषामुत्तमोत्तमः । तस्यापीशः कारणं च वासुदेवः परोऽव्ययः । न तस्य सदृशः कश्चित्कुत एवोत्तमो भवेत् । तं ज्ञात्वा मुच्यते जंतुर्विदित्वैव परात्परमिति प्रमाणेन व्याख्याता । नाम चेत्यनंतरं यथेमाः स्यंदमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छंति भिद्येते तासां नामरूपे तत्समुद्र इत्येवं प्रोच्यते । एवमेवास्य परिद्रष्टुरिमाः षोडशेत्यादि । पुरुषायणा इत्यनंतरं पुरुष प्राप्यास्तं गच्छंतीति पूर्वोत्तरवाक्यशेषः । अस्तमदर्शन मुक्तौ गच्छंति । कर्तेत्यादि पाठे यो भवान्धर्मस्य कर्ताऽविता प्रवक्ता च तेन भवता । धर्म्यो धर्मादनपेतः ॥ ४—८ ॥ तं प्रश्नपरिहारं मे सकाशान्निबोध विजानीहि ॥ ९ ॥ यथेदानीं वर्णस्य ब्राह्मणादिनाम तथा कृतयुगे हंस इत्येव नाम ॥ १० ॥ जात्योत्पत्तिमारभ्य प्रणवस्तत्प्रतिपाद्यो हरिरेक एव वेदो वेदप्रतिपाद्यः । इंद्रादिनामान्यपि हरिरेवातो देवतातया स एव पूज्यः । ब्रह्माद्यास्तदा मनुनामका हरिभक्तत्वादिनैव पूज्याः ।

न तु देवतात्वेन। तदा नैव ऋगादिभेदेन वेद आसीदित्याद्याथर्वणोपनिषद्भाष्ये स्पष्टं ॥ वृषरूपेति। समग्रचतुष्पादित्यर्थः हंसा हंसनामकवर्णवत्यः प्रजाः ॥ ११ ॥ त्रेतामुखे त्रेताप्रारंभे मे मम हृदयात्प्रियात्प्राणाद्विरिंचात्त्रयीविद्या ऋगादिभेदेन त्रित्वसंख्योपेततया वेदविद्या प्रादुरभूत्। तस्या विद्यायाः सकाशात्त्रीन्वेदान्त्रणोतीति त्रिवृद्ब्राह्मणः स एव मुख्यं द्वारं यस्य स तथोक्तः। ब्राह्मणद्वारा वेदविद्यया प्रादुर्भूत इत्यर्थः ॥ १२ ॥ ये आत्माचारलक्षणाः स्वस्वविहिताचाररूपा ये धर्मास्तेऽपि वैराज्याद्ब्रह्मांतर्यामिणः पुरुषाद्विराट्ब्राह्मणो जाता इत्यर्थः। तस्मादाश्रमादन्ये जाता इत्यपि ग्राह्यं ॥ १३ ॥ इदानीमाश्रमोत्पत्तिस्थानमाह ॥ गृहेति। तत्तदाश्रमाभिमानीदेवस्तज्जस्तदाश्रित इति द्रष्टव्यं ॥ १४ ॥ नृणां वर्णादीनां प्रकृतयः स्वभावाः। जन्मभूमिर्या शीर्षहृदादिरूपा तदनुसारतो नीचोत्तमोत्तमा आसन्। तत्र नीचः शूद्रः। तज्जनकपादस्य नीचत्वात्। नीचोत्तमो वैश्यस्तज्जनकोर्वोस्तथात्वात्। उत्तमः क्षत्रियस्तज्जनकबाह्वोस्तथात्वात्। विप्र उत्तमोत्तमस्तज्जनकमुखस्य तथात्वात्। एवं जघनहृदुरःशीर्ष्णां नीचनीचोत्तमोत्तमत्वरूपत्वाद्गृहस्थाद्याश्रमा अपि तथेति मंतव्यं ॥ १५ ॥ विप्रादिस्वभावलक्षणमाह ॥ शम इत्यादिना। आर्जवं मनोवाक्कायकर्मणामवैपरीत्यं। यद्यप्येषां सांकर्यं तथाऽपि तथा स्वसमानाधिकरणगुणानां मध्ये एतेषां प्राचुर्यं द्रष्टव्यं ॥ १६ ॥ १७ ॥ अर्थोपचये द्रव्याभिवृद्धौ सत्यामतुष्टिरलंबुद्ध्यभावः। इदमस्तीदमपि मे भविष्यति पुनर्धनामिति बुद्ध्या भाव्यमित्यर्थः ॥ १८ ॥ अमाययाऽकापट्येन। तत्र शुश्रूषणादिके कृते सति तस्माल्लब्धेनान्नादिनेत्यर्थः ॥ १९ ॥ शुष्कविग्रहो व्यर्थकलहः। अंतेवसायिनां वर्णबाह्यानां ॥ २० ॥ २१ ॥ द्वितीयं जन्म। आनुपूर्व्यादानुपूर्वी श्रुतिर्वेदस्त्रय्याम्नाय उच्यत इत्यभिधानाद्वेदोक्तप्रकारेणेत्यर्थः। अत एव द्विर्जायत इति द्विजः। ब्रह्म वेदं ॥ २२ ॥ मेखलं मौंजी ब्रह्मसूत्रं यज्ञोपवीतं कमंडलुन्दधदित्यन्वयः। अधौतदंत इति पदच्छेदः। वैश्वदेवं बलिं दंतधावनं चाप्यृते वटोरिति वटोर्दंतधावनाभावोक्तेः। स्नानादिषु वासः पीठकुशान् दधदित्यन्वयः ॥ २३ ॥ जपे उच्चारे ॥ २४ ॥ मलविसर्जनसमये नावकिरेद्बुद्धिपूर्वकं नोत्सृजेत्। अवकीर्णे स्वामस्त्रीसंदर्शनेन प्रमादादवकीर्णे सति। त्रिपदां गायत्रीं शुचिर्भूत्वा ॥ २५ ॥ २६ ॥ नन्वाचार्योपासनं कस्मात्कार्यमित्यत आह ॥ आचार्यमिति। मां मत्सन्निधानपात्रं। सर्वदेवमयः सर्वसन्निधानपात्रं ॥ २७ ॥

तस्य गुरोर्गुरुणानुज्ञातं ॥ २८ ॥ गुरोर्याने गमने शय्यायामासने । उपवेशने स्थानेऽवस्थाने च सति स्वयं नातिदूरे समीपे कृतांजलिर्भूयात् ॥ २९ ॥ एवं व्रतः सदाचारयुक्तः स्रक्चदनादिभोगविवर्जितः ॥ ३० ॥ छदसां लोकं वेदाध्ययनसाध्यं लोकमारोक्ष्यन्नारोढुकामः । कोऽसौ छंदसां लोक इत्यत उक्तं ॥ ब्रह्मविष्टपमिति । सत्यलोकमित्यर्थः । बृहद्व्रतो नैष्ठिकब्रह्मचर्यवान् ॥ ३१ ॥ अपृथग्धीर्भगवत्सकाशात्पृथक् विषयेषु धीशून्यः ॥ ३२ ॥ क्ष्वेलनं नर्मवचनं । अगृहस्थो ब्रह्मचारी स्वस्याग्रतः पुरुषपश्वाद्याः । प्राणिनो मिथुनीभूता मैथुनकरणावस्थायुक्ता दृष्टाश्चेत्तर्हि तांस्त्यजेन्नावलोकनं कुर्यात् । वर्जनं कुर्यादिति शेषः ॥ ३३ ॥ तीर्थसेवा कार्येत्यादि यथायोग्यं शेषः ॥ ३४ ॥ मद्भावो मत्सत्ताज्ञानं ॥ ३५ ॥ ३६ ॥ अनंतर गृहस्थाश्रमं । अवेक्ष्यन्प्रवेष्टुकामो यथा यथावज्जिज्ञासितागमो विचारितवेदादिः । जिज्ञासितं सुसंपन्नमिति विचारेऽपि तत्प्रयोगात् । स्नायात्स्नातकवेषं धारयेत् । तीर्थयात्रां कुर्यादित्यर्थः । तदनंतर गृहस्थाश्रमस्वीकारं कुर्यात् । प्रव्रजेत्संन्यासं वा गृण्हीयात् । एवमेकस्मादाश्रमादाश्रमांतरं गच्छेत् । नान्यथाऽऽश्रमरहितो भूत्वा न चरेत् ॥ ३८ ॥ गृहार्थी गृहस्थाश्रमस्वीकारार्थी । यवीयसीं स्वापेक्षया वयसा नीचां यामुद्वहेत्तां सवर्णां ब्राह्मणो ब्राह्मणस्त्रियमित्यादि । अनुक्रमादिति पक्षांतरं । ब्राह्मणः क्षत्रियस्त्रियं क्षत्रियो वैश्यस्त्रिय वैश्यो शूद्रस्त्रिय शूद्रः शूद्रस्त्रियमेवेति ॥३९॥ दानानि विहितानि । सर्वेषां ब्राह्मणक्षत्रियवैश्यानां । याजन चेति संबंधः । विहितमिति शेषः ॥४०॥ प्रतिग्रहं तप आदीनां नाशकरं मन्यमानोऽन्याभ्यामध्यापनयाजनाभ्यां जीवेत । तयोरध्यापनयाजनयोरपि दोषदृक् शिलोंछवृत्त्या जीवेत् ॥४१॥ ननु शिलोंन्छवृत्त्या कामपूर्तिः कथं स्यादित्यत आह ॥ ब्राह्मणस्य चेति ॥४२॥ विरजं शुद्धं नातिप्रसक्तो गृहे ॥ ४३ ॥ ये जनाः ॥ ४४ ॥ आत्मानं स्वात्मानं । आत्मना मनसा ॥४५॥४६॥ ब्राह्मणादेरापद्धर्मानाह ॥ सीदन्निति । वणिजां वृत्तिं दर्शयति । पण्यैरापणं कृत्वा तत्र क्रयार्थधान्यादिकं प्रसार्य विक्रीणनैरित्यर्थः । महापदि विशां धर्मैरित्युक्तः पराक्रांतः पराक्रमयुक्तश्चेत् खड्गेन क्षत्रधर्मेण । श्ववृत्तिर्नीचसेवन ॥ ४७ ॥ तथा श्राद्धादिपर्वकाल एव मृगयात्रां कृत्वा तन्मांसभक्षण क्षत्रियैः कार्य न सर्वदेति धर्मः । आपादि च सर्वदा मृगया जीवेत् ॥ ४८ ॥ कारुकाक्रियां कारुको रजकस्तात्क्रियां कटक्रियां कटादिकर्तॄणां । कृच्छ्रादापदः सकाशाद्गर्ह्येण निंदनेन । पूर्वमापदि स्वीकृतेन कर्मणा ॥ ४९ ॥

यथोदयं भाग्यानुसारेण । अत्र मद्रूपाणीति भूतानां मत्स्यादिवत्साक्षाद्भगवद्रूपत्वं प्रतीयतेऽतस्तात्पर्यं प्रमाणेनाह ॥ प्रतिमावदिति । तथा च मम रूपाणि प्रतिमाभूतानीत्यर्थः ॥ ५० ॥ ५१ ॥ अदृष्टं स्वर्गादि ॥ ५२ ॥ पांथसंगम इवेति लुप्तोपमा । अनुदेहं देहमनु । प्रतिदेहमित्यर्थः । निद्रानुगो निद्रानंतरभाविस्वप्न इव ॥ ५३ ॥ परिमृशन्विचारं कुर्वन् ॥ ५४ ॥ आश्रमादाश्रमं गच्छेदिति विकल्पक इत्याह ॥ कर्मभिरिति । प्रजावांश्चेद्भार्यां पुत्रेषु न्यस्य परिव्रजेत् ॥ ५५ ॥ पुत्रवित्तैषणातुरः पुत्रवित्तविषयेच्छातुरः ॥ ५६ ॥ आतुरतामेव दर्शयति ॥ अहो इति । यद्यपि वृद्धौ च मातापितरावित्याद्यस्ति तथाऽपि सज्जनपित्रादिपरं तत् । इदं तु स्वाभावदुष्टपित्रादिपरं मंतव्य । बालात्मजा बाला आत्मजा यस्याः सा बालात्मजा । आत्मजा अनाथाः । तदेवदर्शयति ॥ मामृत इति ॥ ५७ ॥ गृहाशया गृहेष्वतितृष्णया । तान् गृहादीन् ॥ ५८ ॥ इति श्रीभागवतटिप्पण्यां सप्तदशोऽध्यायः ॥ ११—१७ ॥ ॥

॥ हरिः ॐ ॥ वनं चोपविशेदित्युक्तवानप्रस्थस्य प्रवृत्तिप्रकारमाह ॥ वनमित्यादिना । विविक्षुः प्रवेष्टुमिच्छुः । पुत्राभावे सहैव वा । आयुषस्तृतीयं भागं । चतुर्मासाधिकत्रयस्त्रिंशद्वर्षपरिमितं भागं वसेदिति । कालाध्वनोरत्यंतसंयोगसूत्रेण मासमधीयीतेतिवद्द्वितीया ॥ १ ॥ कंदमर्शघ्नादि । मूलं रक्तमूलं ( गड्डीगेणसु )। फलं चूतादीनां । तैर्वन्यैर्वनभवैः । मेध्यैः पवित्रैर्न त्वपवित्रैः । पलांड्वादिकं तदादिभिः । वृत्तिं जीवनोपायं ॥ २ ॥ शिरस्थाः केशाः कक्षशिश्नगतानि रोमाणि । श्मश्रूणि मुखगतानि । तेष्वेव छेदप्रसक्तिसद्भावाद्बिभृयादित्युक्तं । मलं बिभृयाद्देहस्थमलस्योद्वर्तनं न कुर्यान्न धावेत् । त्रिकालमप्सु मज्जेत ॥ ३ ॥ दिक्चतुष्टये चत्वारोऽग्नय उपरि सूर्य एक इति पंचाग्नयः । पंचाग्निमध्ये तपः कुर्वीतेति यावत् । आसाराषाट् आसारो वृष्टिस्ता सहत इति आसारषाट् । शिशिरे हेमंतशिशिरयोरैक्याच्चत्र जले कंठपर्यंतं मग्नः । एवं वृत्त एवं स्थितिमान् ॥ ४ ॥ कालपक्वं कदलीफलादि । उलूखलकुट्ट उलूखलकुट्टितकंडितपिष्टीकृतधान्यादिभक्षः । अश्मकुट्टोऽश्मना चूर्णितधान्यादिभक्षणः । दंत एवोलूखलो यस्य ॥ ५ ॥ संचिनुयात्संग्रहं कुर्यात् । वृत्तिकारणं जीवनोपायभूत धान्यादि । अन्यदित्यव्ययं । अन्येनाहृतं नाददीतेत्यर्थः ॥ ६ ॥ वन्यैर्धान्यैः । कालचोदितांस्तत्तत्काले विहितांश्चर्वादीन् ॥ ७ ॥ पूर्ववद्गृहस्था-

श्रमे यथा तथा । नैगमैः कल्पशास्त्रैराम्नातानि चातुर्मास्यानि तन्नामकयागान्कुर्यात् ॥ ८ ॥ धमनिभिः शिरैः सततो व्याप्तः । तपोमयं ज्ञानरूपं । ऋषिलोकात् । ल्यब्लोपनिमित्ता पंचमी । आदौ ऋषिर्लोकं प्राप्य पश्चान्मामुपैति ॥९॥ नैश्रेयसं मोक्षसाधनं । नियमे स्वाश्रमविहिताचरणे ॥१०॥ क्रमप्राप्तं संन्यासाश्रमस्वीकारप्रकारं तद्धर्मांश्चाह ॥ यदिति ॥११॥ कर्मविपाकेषु कर्मफलेषु । निरयात्मसु दुःखप्रचुरात्मकत्वान्नरकतुल्येषु । जायते यदा ततस्तदा । यदहरेव विरजेत्तदहरेव प्रव्रजेदित्युक्तेः ॥१२॥ प्रव्रजने इत्थभावमाह ॥ इष्ट्वेति । यथोपदेशं विध्युक्तप्रकारेण । प्राणेऽतर्यामिणि हरौ । आत्मारोपणं कृत्वेति यावत् ॥ १३ ॥ देवान्संपूज्य तेभ्योऽनुज्ञामादायैव न्यासः कार्योऽन्यथा ते दारादिषु स्थित्वा विघ्नं कुर्वंतीत्याह ॥ विप्रस्येति । दारादिरूपिणः दारादिषु स्थित्वेति यावत् । अयं न्यास्यस्माना-त्क्रम्यातिक्रम्य परं समियात्प्राप्नुयादिति । गृहस्थाद्याश्रम एव स्थितश्चेद्यज्ञादिनाऽस्मानिष्ट्वाऽस्मान्प्राप्नुयात् । न्यासी चेत्तस्य यज्ञा-देरभावान्निष्कामकर्मणा हरिं पूज्यास्मानप्राप्य परमेव समियादिति बुद्ध्या विघ्नं कुर्वंतीत्यर्थः । ननु सन्मार्गे प्रवर्तमानस्यानुकूला एव देवा भवंतीति वक्तव्यं । कथं विघ्नं कुर्वंतीत्युच्यत इत्यतस्तात्पर्यमाह ॥ असपूज्येति । न्यसिष्णून्संन्यासं गृहीतुमिच्छून् । गृहस्थाश्रम स्वीकृत्यापि पंचमहायज्ञादिना देवानसंपूज्य न्यसिष्णून्देवा अधः पातयंतीत्यर्थः । ननु कचित्संपूज्य न्यसिष्णूनामपि देवा विघ्नं कुर्वंतीत्युच्यते । तत्र का गतिरित्यत आह ॥ अथवेति ॥ तदिति । न्यसिष्णोरित्यर्थः । एवं किल देवैर्विघ्नितोऽप्ययं संन्यासं गृहीतवानिति तद्यशोऽभिवृद्ध्यै इत्यर्थः । ननु विघ्नंतीवेति कस्मादुच्यते । वस्तुतो विघ्नं कुर्वंत्येवेति कस्मान्न स्यादित्यत आह ॥ तात्पर्यादिति । वस्तुतोऽस्य विघ्नं करिष्याम इति बुद्धिपूर्वं देवैर्विघ्नितो विघ्नं प्रापितोऽयमुत्थापितुमेव न शक्नुयादित्यर्थः ॥ १४ ॥ बिभृयादित्यतः पूर्वं मुनिः संन्यासी वास एव न बिभृयाद्दिगंबर एव स्यादिति वाक्यशेषः । परं केवलं कौपीनरूपमेकमेवाच्छादनं बिभृयादित्यर्थः । अनापदि दंडकाष्ठकमंडलुरूपपात्राभ्यामन्यत्किंचिद्वस्तु न बिभृयात् । कुत इत्यत उक्तं ॥ त्यक्तमिति । यतः पूर्वं तत्सर्वं त्यक्तमस्त्यतस्तन्न बिभृयादित्यर्थः । आपादि तु तं बिभृयादिति लभ्यते ॥ १५ ॥ दृष्टिपूतत्वस्य पादविशेषेणत्वेऽसंगत्यापत्तेर्दृष्टिपूतं स्थलमुद्दिश्य पादं न्यसेदिति योज्यं ॥ १६ ॥ वाग्देहचेतसां मौनानीहानिलायाम एतद्रूपा दंडाः कर्तव्याः । मौनेन वाचोदंडः । अनीहया निषिद्धाचरणत्यागेन देहदंडः । अनिलायामेन प्राणायामेन चेतोदंड

इति विवेकः। एते दंडा वेणुभिः। वेणुधारणमात्रेणेति यावत्। बहुवचनं त्रिदंडिविवक्षयेति ज्ञेयं ॥ १७ ॥ चतुर्षु चरेत्। चतुर्ष्वपि वर्णेषु गर्ह्यान्पतितान्वर्जयन्नित्यर्थः। मया भिक्षार्थमागम्यत इत्यसंक्लृप्तान्। ननु सप्तागारलब्धभिक्षान्नस्याल्पत्वात्तावता कथं तोप इत्यत आह ॥ तुष्येदिति ॥ १८ ॥ उपस्पृश्य जलेनाचम्य। याचितमन्नं विभज्य गोग्रासाद्यर्थं निष्कास्य शेषं शिष्टमाहृतमन्नमशेषं यथा स्यात्तथा भुंजीत ॥ १९ ॥ नन्वेकाकितया चरणे कथं तस्य रमणं प्रत्युत दुःखमेव संभाव्यते तस्मादेकाकी न रमत इति श्रुतेरित्यत आह ॥ आत्मेति। परमात्मना क्रीडा यस्य स तथोक्तः। आत्मरतः परमात्मदर्शननिमित्तसंतोषं प्राप्तः। आत्मवान्वशीकृतमनाः ॥ २० ॥ विविक्तमेकांतस्थलमेव क्षेमकरं शरणं गृहं यस्य स तथोक्तः। मद्भावो मद्भक्तिः। मयाऽभेदेन। उपलक्षणमेतत्। मदुपलक्षितसर्वावताराभिन्नतया। एकमात्मानं परमात्मान चिंतयेत् ॥ २१ ॥ आत्मनः स्वस्य बंधमात्मनो हरेरज्ञानेनेक्षेत। आत्मनो मोक्षं चात्मनो ज्ञाननिष्ठतया भगवतो हरेर्ज्ञानेन भवतीतीक्षेत जानीयात्। को बंधः कश्च मोक्ष इत्यत आह ॥ बध इति। इंद्रियाणां विषयेषु निक्षेपः प्रसरणमित्यर्थः। एषामिंद्रियाणां संयमो नियमनं ॥ २२ ॥ आत्मनि स्वस्मिन्परमात्मदर्शननिमित्तं महत्सुखं लब्ध्वा ॥ २३ ॥ पुण्य शब्दस्य देशादिभिः प्रत्येकं संबंधः ॥ २४ ॥ पदं स्थानं। अभीक्ष्ण निरतरं। अत्राभिक्ष्णामित्युक्त्या पुरग्रामव्रजेषु भिक्षाकरणं विकल्पेनेति सूचयति। ननु वानप्रस्थाश्रमस्थानेषु नित्यं भिक्षाकरणेन किं क्षिप्रं फलमत्राह ॥ संसिद्ध्यतीति। शिलांधसा शिलोंछवृत्त्या। वानप्रस्थसंपादितान्नभोजनेन शुद्धसत्त्वः शुद्धांतःकरणोऽत एवासंमोहो मिथ्याज्ञानशून्यः। अथ संन्यास्याशु संशुद्ध्यत्यपरोक्षज्ञानी भूत्वा मुक्तो भवतीत्यर्थः ॥ २५ ॥ इत्थंभावांतराण्याह ॥ नेति। एतद्दृश्यमानं जगद्वस्तुतया शक्त वस्त्विवति चोच्यत इति परमात्मैव शक्तत्वाद्वस्तु शब्दवाच्यः। तथा च तदभिन्नतया न पश्येत्। यत इदं विनश्यति। इहामुत्रफलेष्वसक्तचित्तः सन् चिकीर्षितादैहिकपारत्रिकस्वर्गादिसाधनतया कर्तुमिष्टात्कर्मादेर्विरमेत्। न कुर्यादिति यावत् ॥ २६ ॥ आत्मनि भगवदाधारत्वेन विद्यमानं। मनो रुद्रो वाग्भारती प्राणो वायुः। एतैः संभूतं पूर्णं पूरितं यदेतज्जगत्सर्वमित्यर्थः। मायेत्यनिर्वचनीयाविद्यकल्पितमित्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव व्याकरोति ॥ त्रिगुणेति। अनाद्यनंतकालेष्वीदृशं प्रवाहत एकप्रकारं जगत्तज्जन्यत्वान्मायेत्याहुरित्यन्वयः।

मूल योजयति ॥ अचेतनत्वादिति । प्रयोजकतया । अनेन मम किंचित्प्रयोजनमस्तीति प्रयोजनहेतुत्वेन । स्वातन्त्र्येणेति यावत् । माया शब्दार्थं प्रकारांतरेणाह ॥ आयस्विति ॥ निष्फलमिति । अमानो नाः प्रतिषेध इति मा शब्दस्य निषेधार्थकत्वात् । तथा च सर्वं जगद्धीरा मायेत्यचेतनप्रकृतिनिर्मितत्वेनाचेतनतयाऽस्वतन्त्रमिति निष्फलमिति च तर्केण । यदि नाम न तस्य वशे सकल कथमेव तु नित्यसुखं न भवेदित्यादियुक्त्या विज्ञाय त्यक्त्वा जगन्न संस्मरेत्प्रयोजकतया स्वातंत्र्येण महाफलहेतुत्वेन च तत्स्मरण न कुर्यात् । किंतु तथा भगवत्स्मरणमेव कुर्यादित्यर्थः ॥ २७ ॥ वा शब्दौ न विकल्पार्थौ किं नाम समुच्चयार्थौ । सलिंगान्दंडादिचिन्हयुक्तान् ॥ २८ ॥ गोचर्या गोवच्चरणं । अजवच्चरणमित्यर्थः । नैगमो वेदोक्तविधिना वर्तमानः ॥ २९ ॥ वेदवादरतो न स्यादिति वेदाप्रामाण्यवादिबौद्धादिपक्षावलंबी न स्यादित्यन्यथाप्रतीतिनिरासाय वेदवाद शब्दार्थं प्रमाणेनैवाह ॥ वेदेनेति । वादो विवादो वेदेन सह कथाकरणमित्यर्थः । कोऽयं विवाद इत्यत आह ॥ तर्केणेति । वादो विषयकृत्वं च मुखशो वचनं स्मृतमित्युक्तापातप्रतीतार्थरूपो वेदवाद शब्दार्थो न ग्राह्यः । किं नाम तर्केण । भेदो मिथ्या भेदत्वादित्यादितर्कमाश्रित्य । स आत्मा तत्त्वमसीत्यादिवेदस्याकारप्रश्लेषेण व्याख्यानमविधाय तत्त्वमसीत्येवं पद विच्छिद्य भगवदधीनत्वरूपार्थादन्यो योऽर्थोऽभेदरूपस्तत्कल्पनमेव । तद्विदो वेदवाद शब्दार्थविदो जना विदुरिति योज्यं । तत्कल्पनं । पाषंडान्हैतुकांश्च प्रमाणेनैव दर्शयति ॥ योगेति । पश्वीशः पशुपतिः । तथा च प्रमाणविरुद्धतया वेदेन प्रतीतार्थस्य कुतर्कमाश्रित्य तद्विरुद्धार्थांतरपरो न स्यान्मायिमतावलंबी न स्यात् । पाषंडी पशुपत्यादिमतावलंबी । हैतुकी चार्वाकादिमतावलंबी च न स्यात् । शुष्को निरर्थको यो वादो वेदेन सह या कथा तद्विवादेन तत्कलहेन वेदोक्तं परित्यज्य कमपि पक्षं पशुपत्यादीनां न समाश्रयेदित्युपसंहारः ॥ ३० ॥ नोद्विजेत्स्वयं न चकितः स्यात् । नोद्वेजयेत्स्वप्रयुक्तभयोपेतान्न कुर्यात् । देहमुद्दिश्यातिवादान अयुक्तीः । देहमुद्दिश्य कंचन नावमन्येत ॥ ३१ ॥ पशुवदिति । यथा शृंगेणैकेन पशुना हतोऽपरः पशुः स्वयमपि शृंगेणापरं तद्वैगद्धंति । तथा वैरं केनाचिन्न कुर्यादित्यर्थः ॥ ३२ ॥ वैराकरणे किं निमित्तमित्यतः सर्वत्रापि हर्यनुसंधानमेव निमित्तमित्याशयेनाह ॥ एक एवेति । यद्वद्यथैकमेव खमाकाशमुदपात्रेषु घटोदंचनादिष्वास्ति । एवं परः सर्वोत्तम आत्मैक एव भूतेषु प्राणिष्वात्मानि च स्वास्मिश्चावस्थितो

हि यस्मात्तस्मान्न केनचिद्वैरं कुर्यादिति संबंधः। भूतान्येकात्मनीत्यत्र भूतान्येको भगवांस्तदात्मकानीत्यन्यथाप्रतीतिवारणायार्थमाह ॥ भूतानामिति। यस्मादिति शेषः। भूतान्येकात्मनीत्युच्यंत इति शेषः। तथा च भूतानि प्राणिजातान्येको भगवानेवात्मा। अत्ता व्यापक आदत्ता चैषां तान्येकभूतात्मकानीत्यतश्च वैरं न कुर्यादिति संबंधः इति योज्य। एवमेकात्मनीत्यत्रात्म शब्दो यदाऽत्तृत्वाद्यर्थकस्तदा ख यद्वदिति दृष्टांतः। पूर्वेणैव संबध्यते। उत्तरत्र संबंधेऽर्थबाधादित्याशयेनैवैकात्मनीत्येतदादौ व्याख्यातं। इदानीं ख यद्वदिति दृष्टांत एकभूतात्मकानीत्युत्तरेणैव संबध्यते। तत्र चात्म शब्दो नात्तृत्वाद्यर्थः किंतु परमात्मार्थकः स्वामित्वार्थकश्च। तथा चोदपात्रेषु विद्यमानं खमाकाशद्वयं यथा महाकाशाधीनमेवं भूतानि। आकाशद्वयस्थानीयाः सज्जीवा असुराश्चैकात्मकान्येक एव महाकाशस्थानीया आत्मा परमात्मा स्वामी येषां तानि तथोक्तानि। महाकाशस्थानीयभगवत्स्वामिका इत्यर्थ इति मूलयोजनामभिप्रेत्य किं तदाऽऽकाशत्रयं कथं चैकाधीनत्वमितरद्वयस्य प्रकृते च कथं तत्साम्यमित्यतः प्रमाणेनैव तद्विविच्य दर्शयति ॥ घटादिष्वित्यादिना। उदपात्रेष्वित्यस्यार्थः ॥ घटादिष्विति। आदि पदेनोदंचनादीनां संग्रहः। निर्विशेषोऽशैरत्यंताभिन्नोऽव्याकृताकाश इत्यर्थः ॥ घटावयवेति। घटस्य पृथिव्युपादानकत्वात्तस्यां च पंचीकरणपक्षे आकाशस्यापि सद्भावादाकाशस्य घटावयवत्वं मंतव्यं। तृतीयोऽप्याकाशोऽस्तीत्याह ॥ घटनाश इति। अयं घटावच्छिन्नो भूताकाश इति मंतव्यं। ननु घटावयवरूपमाकाश भूताकाशमेव। तदवच्छिन्नं मध्यमाकाशमपि तदेवातः कथं भूताकाशद्वैविध्यमंगीकृत्याकाशत्रैविध्याभिधानमित्यत आह ॥ एकेति। एकदेशाभिमानिकत्वादिति बहुव्रीहिः। एकदेशे भिन्नाभिमानिनौ यस्य तदेकदेशाभिमानिकं तस्य भावस्तत्वं तस्मादित्यर्थः। तथा च भूताकाशस्यांशद्वयं। तत्र घटावयवरूपैकदेशस्य तदवछिन्नस्य च वक्ष्यमाणरीत्याभिमानिनोर्भिन्नत्वात्तदभिमन्यमानमपि द्वैविध्यं विवक्षितमित्याशय इत्याहुः। यद्वा। एकदेशाभिमानित्वादित्यस्य विघ्नराज इत्यनंतरमेव संबंधो मंतव्यः। इदानीमभिमानिनौ दर्शयति ॥ महाकाश इति। विघ्नराजो गणपतिः। नन्वव्याकृताकाशाभिमानिनी लक्ष्मीरेव सिद्धाऽतस्तस्य कथं विघ्नराडधिपतिस्तस्यापरिच्छिन्नत्वेन गणपतेर्भूताकाशमात्रव्यापिनः परिच्छिन्नस्य तद्व्याप्त्ययोगादित्यत उक्तं ॥ एकदेशाभिमानित्वादिति। विघ्नराजस्य घटाद्यवच्छिन्नाव्याकृताकाशैकदेशाभिमानित्वस्यापि

प्रमाणसिद्धत्वात्तदभिप्रायेण महाकाशो विघ्नराज इत्युक्तमित्यदोषः । विघ्ना गणपतिभृत्या मध्यमा मध्यमाकाशाभिमानिनः । क्षुद्रविघ्नास्तेऽपि गणपतिभृत्याः । तदितरे तदितरस्मिन् घटावयवरूपाकाशेऽभिमानितया संतीत्यर्थः । क्षुद्रविघ्नास्तदितर इति सामानाधिकरण्यं वा । तदितरे घटावयवरूपाकाशा इत्यर्थः । अभिमानित्वलब्धोऽर्थः । आत्मा आत्म शब्दवाच्यास्त्वय इत्यर्थः । तत्साम्य दार्ष्टांतिके दर्शयति ॥ महाखवदिति । जीवाः सज्जीवाः ॥ घटानुगखवदिति । घटावयवभूतखवत् । इदानीं ख यद्वदिति मूलं योजयति ॥ महाकाशेति । गणपतीत्यर्थः । सर्वे इतरे आकाशाः । विघ्नाः क्षुद्रविघ्नाश्च । तथा चोदपात्रेषु खमाकाशद्वयाभिमानिनौ यथा महाकाशाभिमानिन्यधीनावित्यर्थ उक्तो भवति । परमात्मवशेनेत्यनेन भूतानि मध्यघटानुगखवाद्विद्यमानाः प्राणिन एकात्मकान्येकपरमात्मस्वामिकानि तद्वशा इत्यर्थ उक्तो भवति । एवमित्युपसंहारः ॥ ३२ ॥ ३३ ॥ उभयं लाभालाभद्वयं । देवस्य मम तंत्रितमधीनं । मन्वान इति शेषः । तर्ह्यशनार्थं प्रयत्नोऽपि न कार्य इत्यत आह ॥ आहारार्थमिति । ननु नाहारं चिंतयेत्प्राज्ञ इति निषेधविरोध इत्यत आह ॥ युक्त तदिति । प्राणधारणमुद्दिश्य तत्समीहनं युक्तं ॥ ३४ ॥ कुत इत्यत आह ॥ तत्त्वमिति । तेन प्राणधारणेन । तत्त्वविमर्शनेनापि किमित्यत आह ॥ तद्विज्ञायेति । तत्त्वं ज्ञात्वेत्यर्थः । श्रेष्ठमुत्तमाशनपरं कदन्नं वा । यदृच्छयेत्यस्योत्तरत्रापि संबंधः ॥ ३५ ॥ यदृच्छया प्राप्तं वासो यदृच्छया प्राप्तां शय्यां ॥ ३६ ॥ शौचमित्यत्र चोदनया नाचरेदिति विधिपारित्यागेन चरणं कथ्यत इत्यतस्तात्पर्यमाह ॥ स्वभावत इति । स्रोतोवेगवदित्याशयः । धर्मपरो भवेत् ॥ ३७ ॥ इदं चतुर्मुखविषयं । भाव शब्दाच्चेति सूत्रे विधिर्भावे प्रजापतिरिति तस्यैव स्वेच्छाविध्युक्तेः । तदिच्छानुसारेणैव हि वेदानां प्रवृत्तिः । चकिते विधिभयेन चरणे । मध्यमाधमविषयमिदं । तथा च यथेश्वरोऽहं लीलया विध्यचकिततया । स्वभावेनेति यावत् । शौचादिना चरामि तद्वच्छौचादीन्स्वभावत एव चरेन्न तु चोदनया विधिचकितत्वेनेत्यर्थः । तत्र हेतुमाह ॥ न हीति । अत्र विकल्प पदं व्याख्याय तत्र प्रमाणमाह ॥ विरुद्धत्वेनेति । वेदविरुद्धत्वेनेत्यर्थः आदौ मनसेदं निषिद्धमिति मनसा संकल्प्य तस्मान्निषिद्धाचरणाद्भीतः सन् त्यक्त्वाऽज्ञो विहितमाचरेदिति योज्यं । ज्ञस्य त्वित्यपि ब्रह्मविषयं । आदेहांतादित्यादेस्तात्पर्यं ॥ शरीरेति । तथाऽपीत्यादिमद्दीक्षयेत्यस्य तात्पर्यं । अपि यद्यपि । नानार्थो भवतीति

शेषः । मोक्षे तु तस्य मनोऽन्यथा निषिद्धे नैव सर्वथा व्रजेत् । तथा च तस्य ज्ञानिनः श्रौतस्मार्तविधिविरुद्धरूपा कल्पना । विरुद्धचरणरूपेति यावत् । क्रिया नास्ति । ननु ज्ञानिनोऽपि देहसद्भावान्निषिद्धेऽपि कदाचिन्मनो गमिष्यत्येवेत्यत आह ॥ मद्दीक्षयेति । आदेहांतात्प्रारब्धकर्मनिमित्तदेहपातपर्यंतं ज्ञानिनोऽपि कचिन्निषिद्धविषयं ख्यातिर्मनोगतिलक्षणा प्रतीतिः स्याच्चेदपि तथाऽपि सा ख्यातिर्मद्दीक्षया मम वीक्षयापरोक्षज्ञानरूपविशेषज्ञानेन हता उत्तराघस्याश्लेष इत्याशयः । ततोऽनतरं मया मदनुग्रहेण स्वस्वरूपाविर्भावं संपद्यते प्राप्नोति ॥ ३८ ॥ काम्येषु काम्यंत इति कामा विषयास्तेषु । तत्र हेतुर्दुःखोदर्केष्विति । विविधसांसारिकदुःखदर्शनेन हि वैराग्यं भवतीत्याशयः । अजिज्ञासितमद्धर्मोऽविचारितजगज्जन्मादिकर्तृत्वादिमद्धर्मोऽविचारितभागवतधर्मो वा ॥ ३९ ॥ यावदिति । ब्रह्मज्ञानानंतरं गुरुपरिचरणाभाव उच्यत इत्यन्यथाप्रतीतिनिरासायार्थमाह ॥ शुश्रूषेदिति । सहितः । मूले श्रद्धावाननसूयक इत्युक्तत्वाच्छ्रद्धादिगुणैरिति शेषः कर्तव्यः । तस्य गुरोर्ज्ञानोपदेशानंतरं त्वया मत्समीप एव स्थातव्यमिति प्रीत्या गुरुर्वक्ति चेत्तस्य प्रीतये तदा तत्परिचरणं कुर्वता स्थेयं । तत्समीपे प्रीत्याऽनुज्ञां ददाति चेत्तत्प्रीत्यनुसारेण गंतव्यमित्याशयः । परं तत्प्रीत्यनुसारेण तत्सेवा कर्तव्येति हृदयं । मां गुरुं मत्सन्निधानपात्रं गुरु ॥ ४० ॥ असयतेति । आनियमितेत्यर्थः । इंद्रियाणामश्वभूतानां सारथिर्मनः प्रचंडो विषयेष्ववस्थितत्वात्स चासाविंद्रियसारथिश्च । त्रिदंडमुपजीवति संन्यासी भवति । यत इति शेषः ॥ ४१ ॥ सः सुरानात्मस्थमात्मानं गुणपूर्णं मां चानिन्हुतेऽपलपतीत्यर्थः । यदि देवादीन् भगवंतं च जानीयात् । तर्हि तस्यासंयतषड्वर्गत्वादि न स्यादसंयतषड्वर्गे चासुरादीनां निन्हुवत्कर्तेत्याशयः । अविपक्ककषायोऽविपक्कांतःकरणः । अस्मादमुष्माच्च लोकात् ॥ ४२ ॥ यत्यादीनां विशेषधर्मान्पुनराह ॥ भिक्षोरिति । ईक्षा हरिविचारः । भूतरक्षा प्राणिनामन्नदानादिना संरक्षणं । इज्या यागः । द्विजस्य ब्रह्मचारिणः ॥ ४३ ॥ गृहस्थस्य विशेषधर्मानाह । वानप्रस्थाद्याश्रमगृहीत्वैतेनैवाश्रमेणाहं शीघ्रं गमिष्यामीत्यपेक्षयाऽग्रतो वानप्रस्थाद्याश्रममगृहीत्वा मोक्षं गंतुर्गृहस्थस्य ब्रह्मचर्यादिकं धर्मः । ऋतुकाले स्त्रीगमनं स्वस्त्रिय एव गमनं वा गृहस्थस्य ब्रह्मचर्यं सर्वेषां मदुपासनं धर्मः ॥ ४४ ॥ एतैर्धर्मैः साध्यमाह ॥ इतीति । मद्भावो मत्सत्ताज्ञानी ॥ ४५ ॥ मत्प्राप्तौ भक्तिरेव प्रयोजिकेत्याह ॥ भक्त्येति ॥ ४६ ॥ स्वविहितधर्मेण निर्णिक्तं धौतमंतःकरणं यस्य

स तथा । मद्भक्तिर्मत्स्वरूपः ॥ ४७ ॥ यो वर्णाश्रमवतां धर्म एष एवाचाररूप आचार इति संप्रोक्तः कर्मांगत्वेन शुद्धिद इत्यादावुक्ताचारोऽयमेवेत्यर्थः । स धर्म एव स्वधर्मसंयुक्तः पुमान्यथाकथं मां समियादिति यद्भवान्परिपृच्छति तदेतत्तेऽभिहितमित्यर्थः ॥ ४८ ॥ ॥ ४९ ॥ इति श्रीभागवतटिप्पण्यामष्टादशोऽध्यायः ११—१८ ॥ ॥

॥ हरिः ॐ ॥ हरिप्रसादजनकं ज्ञानमेवेति स्तौति ॥ य इति । वेदांतविद्याया यच्छ्रुतं श्रवणं तेन संपन्न आत्मवान्निगृहीतेंद्रियः । आनुमानिको मीमांसानुमानशब्दोक्तमीमांसाशास्त्रनिष्णातः । मायामात्रमित्येतदन्यथाप्रतीतिनिरासाय व्याचष्टे ॥ त्रिगुणेति । तन्मात्रकं तदुपादानकं । प्रकृतिः कथं मायेत्यत आह ॥ निर्मिमीत इति । सा प्रकृतिः । मा निर्माणे अस्मात्कर्तरि य प्रत्यये मायेति भवतीत्याशयः । ज्ञानं च मयि सन्यस्येदित्यत्र ज्ञानस्य भगवति संन्यासो नाम क इत्यत आह ॥ इदमिति । हरेः सकाशादुदितमुत्पन्नं । सर्वत्र पुरुषेषु स्थितं ज्ञानं सदा हर्यधीनं न्यासो ज्ञानस्य । तथा चेदं जगन्मायामात्रं प्रकृतिनिर्मितमतोऽस्वतंत्रमित्यादि जानीयात् । ज्ञात्वा च तज्ज्ञानं मयि संन्यसेदित्यर्थः ॥ १ ॥ एतादृशो ज्ञानी मम प्रिय इति वक्तुं तत्र हेतुमाह ॥ ज्ञानिनस्त्विति । इष्टो निरुपाधिकप्रियः । स्वस्यार्थ आनंदलक्षणो यस्मात्स स्वार्थः । हेतुर्ज्ञानोत्पादकः । संमतस्तेन ज्ञातः । इष्टत्वादिना संमत इति वा । मदृतेऽन्यः स्वर्गोऽपवर्गश्चेत्यर्थः । पुरुषार्थो ज्ञानिनः प्रियो न किं त्वहमेव प्रिय इत्यर्थः ॥ २ ॥ एवं ज्ञानविज्ञानाभ्यां संबद्धा युक्तास्ते मम श्रेष्ठपद विदुर्लभंते यस्मादतस्तस्मान्मे मम ज्ञानी प्रियतम इत्युपसहारः । प्रियतमत्वे हेतुमाह । असौ ज्ञानी मां ज्ञानेन बिभर्ति सदा मद्विषयकज्ञानयुक्त इत्यर्थः ॥ ३ ॥ ज्ञानं पुनः स्तूयते ॥ तप इति । पवित्राणि पवित्रकराणि स्नानादीन्यलं सम्यक् या शुद्धिर्ज्ञानकलया ज्ञानैकदेशेन कृता तां शुद्धिं न कुर्वतीत्यर्थः ॥४॥ उत्तरग्रंथोपक्षेपायोपसहारः क्रियते ॥ तस्मादिति । सहितं युक्त स्वात्मानं हर्यधीनत्वादिना ज्ञात्वा भक्त्या भाविता त्रासितः ॥ ५ ॥ ज्ञानविज्ञानरूपयज्ञेन । आत्मानं गुणपरिपूर्णं मां । आत्मनि मनसि मानसयज्ञेन । मामिर्द्धांति यावत । संसिद्धिमपरोक्षज्ञानं मोक्षं च ॥ ६ ॥ ननु स्वरूपेणोत्पत्त्यादिमतो जीवस्य जन्माद्यभावरूपामुक्तिः कथ सगच्छत इत्यतः स्वतश्चिदानंदाद्यात्मकस्य न स्वरूपेणोत्पत्त्यादीति युक्ता तस्य मुक्तिरित्याशयेन स्वरूपे तदभावं वक्तुं त्वयीति श्लोकस्तं दुर्गमार्थत्वादन्यथाप्रतीति-

निरासाय च प्रमाणेनैव व्याख्याति ॥ अन्यस्थमित्यादिना । अन्यस्थं देहादिजन्मादिस्थं जीवे जीवस्वरूपे निर्मितमभिमानतो जीवे । प्रतीयत इति यावत् । तज्जन्माद्युच्यते । मा निर्माण इति धातोः कर्तरि य प्रत्यये मायेति भवति । तथा च माया-निर्मितमित्यर्थः । अन्यस्थमिति योग्यतया संबध्यते । अन्यस्थं निर्मितमिति कुत इत्यतो जन्मादयोऽस्येत्यादेस्तात्पर्यमाह ॥ न हीति । स्वत इत्यस्य पूर्वोत्तराभ्यां संबंधः । स्वतो नित्यस्य स्वरूपतश्चिदानदाद्यात्मकत्वेन नित्यस्य जीवस्य स्वतः स्वरूपेण जन्मादिर्न हि संभवेदित्यर्थः । नाद्यपवर्गयोर्यदित्येतस्यार्थमाह ॥ सृष्टेरिति । आदीत्यस्य व्याख्यानं ॥ सृष्टेः प्रागिति । प्रलय इत्यर्थः । अपवर्ग इत्यस्यार्थः । प्रलय इति । प्रकर्षेण लयः प्रलयो मुक्तिस्तस्यामित्यर्थः । यदित्यस्य यत इत्यर्थः । सप्तसु प्रथमेति सूत्रात् । अस्य जीवस्वरूपस्य । अंतरापततीत्यस्य तात्पर्यं ॥ देहादिस्थ त्विति । कर्मभिः कर्मानुसारतो देहादिस्थ जन्मादि विष्णुना जीवे निर्मितं । अभिमानं दत्वेति यावत् । अभिमानादिकं जीवे प्रतीयत इत्यत्र तात्पर्यं । प्रलयमुक्त्योर्मध्यावस्थायां । संसार इति शेषः । तस्माज्जन्मादिजीवस्वभावो न भवतीत्यर्थः । तत्र हेतुमाह ॥ प्रलय इति । मुक्तिरप्यत्र प्रलय शब्देन ग्राह्या । तस्या अपि लयविशेषत्वात् । तथा च जन्मादिरूपो विकारो न जीवस्वभावः । प्रलयेऽविद्यमानत्वात् । मुक्तावप्यविद्यमानत्वात् । देहादिवदित्यनुमानद्वयं बोद्धव्यं । अनुमानद्वये व्याप्तिमुपपादयति ॥ यन्न विद्येत हीति । यल्लये न विद्येतासौ जीवस्य स्वभावो न । यन्मुक्तिगे जीवे न विद्येतासौ जीवस्य स्वभावो नेति योज्यं । नन्वाद्यानुमाने स्वरूपानंदाद्यनुभवे व्यभिचारः । न हि सज्जीवानामुक्तानां प्रलये स्थितानां मौक्तानंदानुभवसदृशानंदानुभवोऽस्ति । तथा च प्रलये विद्यमानत्वरूपहेतोः सत्वाज्जीवस्वभावत्वाभावरूपसाध्याभावादित्यत उक्तं ॥ प्रायेणेति । तथा च यल्लये न विद्यतेऽसौ जीवस्वभावो नेति व्याप्तेः प्रायिकत्वान्न दोष इत्याशयः । विनिश्चित इति भावे क्तः । विनिश्चय इत्यर्थः । एवमव्याख्याय यल्लये मुक्तौ च न विद्यतेऽसौ जीवस्य न स्वभाव इति एकमेव व्याप्तिमभिधाय चिंतादिभिन्नाभिन्नधर्मव्यावृत्तये प्रायणेति व्याख्यानं महत्कौशलमित्यास्तां । एकानुमानत्वे मुक्तावविद्यमानत्वहेतोः कुत्रापि व्यभिचाराभावाल्लयेऽविद्यमानत्वविशेषणवैयर्थ्यापत्तेरिति दूषणं द्रष्टव्यं । त्रिविधो विकारो मायेत्येतत्प्रमाणांतरेणापि व्याख्याति ॥ मायेतीति । यन्निर्मितं वस्तु तन्मायेत्युक्तं । तु शब्दश्च शब्दार्थः । यतश्च

देहादिगं जन्मादि परेशेन जीवे निर्मितं तेन कारणेन माया शब्दवाच्यं तदिति योज्य । मां शिष्येषु वदेत्यन्यथाप्रतीतेः प्रति शब्दाध्याहारेण योजयति ॥ मा प्रतीति । जन्मादयोऽस्य तव तस्य किं स्युरित्यसंगतं प्रतीयतेऽतः प्रमाणेन तात्पर्यतो व्याख्यातमपि स्ववाक्येन स्पष्टं व्याकरोति ॥ तस्येति । आद्यंतयोर्यदसतोऽस्ति तदेव मध्ये इत्येतद्योजयति ॥ अस्वतत्रत्वादिति । सद्वस्तु शब्दयोः पर्यायत्वादसदित्येतदवस्तुन इति व्याख्यातं । अवस्तुत्वं मिथ्यात्वेन न भवतीत्युक्तं ॥ अस्वतत्रत्वादिति । सद्वस्तु शब्दयोः पर्यायत्वेन सत्वं स्वातंत्र्यमुद्दिष्टमित्युक्तत्वादस्वतंत्रत्वादवस्तुन इति व्याख्या युक्ता । जगत आद्यंतयोः सृष्ट्यपेक्षयाऽऽदिः प्रलयोऽतो मुक्तिस्तत्रेत्यर्थः । यच्चिदानदाद्यात्मकं जीवस्येति मूले शेषोक्तिः । तदेवेत्यनूद्य तस्य स्वाभाविकमिति मूले शेषोक्तिः । मध्य इत्यनंतरमपि शब्दमध्याहृत्य तस्यार्थ उक्तः ॥ ससारेऽपीति । ननु संसारेऽप्यानंदादिरूपत्वस्य स्वाभाविकत्वे कथं तर्हि दुःखादिप्रतीतिरित्यत आह ॥ अन्यदिति । मुक्तिप्रलययोर्यन्नास्ति दुःखादि तदन्यदित्युच्यते । अभिप्रायमाह ॥ प्रलय इति । मुक्तौ चेत्यपि ग्राह्यं । विद्यमानस्य जीवस्वरूपस्य । ननु जीवदेहादेरप्यानंदादिवत्स्वाभाविकत्वात्कथं तस्यापि जन्माद्युपपत्तिरित्यत आह ॥ तदेति । मुक्तिप्रलययोरित्यर्थः । देहादेर्नाशाद्युज्यते । देहस्य जन्मादीत्यर्थः । पिंडितार्थमाह ॥ मुक्तिगमेवेति । आनंदादीत्यर्थः । उपलक्षणमेतत् । प्रलये च विद्यमानमेव प्रायो लिंगदेहकर्मादिव्यतिरिक्तं स्वाभाविकं । प्रलयेऽपि शब्दान्मुक्तौ चाविद्यमानं जन्मादिकं स्वतः स्वाभाविकं न स्यान्न स्यादेवेत्यर्थः । मुक्तिगमेवेत्युक्तार्थे प्रमाणमाह ॥ आद्यतयोरिति । आद्यंतरहितस्य । नित्यस्येति यावत् । जीवस्य यदन्यादृशं वपुर्ज्ञानानदाद्यात्मक वपुस्तस्याद्यतयोः प्रलयमुक्त्योरनुगमान्तरत्वात्तत् । स्वाभाविकमिति शेषः । अनेन मुक्तिगमेवास्य स्वाभाविकमित्युक्तं दृढीकृतं भवति । यदन्यादृशं जन्माद्युपेतं वपुराद्यंते प्रलयमुक्त्योर्न भावि तत्रापि विद्यमानं तन्मध्ये प्रलयमुक्त्योर्मध्ये कथमन्यादृशं स्वाभाविकं स्यात् स्वाभाविकं न भवतीत्यर्थः । अनेन किम्वित्याद्युक्तार्थो दृढीकृतो भवति । तदनाशाद्देहादेर्युज्यत इत्यत्र प्रमाणमाह ॥ अनित्यत्वादिति । तस्य देहस्य मुक्तिप्रलयसंबद्धे जीवे तज्जन्मादिकं कथमिष्यते न कथमपीति योज्यं । ननु कुत एवमित्यतस्तत्र नियमं वाक्यांतरेणाह ॥ अनित्यस्येति । स्वत एव स्वरूपत एवानित्यस्येति सबधः । गुणा जन्माद्या मध्ये भवेयुः । कादाचित्काः । न स्वाभाविका इति यावत् । अतो देहादेर्जन्मादि

युज्यत इत्यर्थः । स्वतः सुखरूपत एव नित्यस्य कादाचित्कगुणैर्जन्मादिभिर्युतिर्युक्तता न तु नैवेत्यर्थः । अतो न जीवस्वरूपेऽसतः सत्तासंबंधरूपं जन्मादि नेष्यत इति भावः ॥ तथा चेयं श्लोकयोजना ॥ हे उद्धव । यस्त्रिविधो जन्मादिस्थितिसंहारलक्षणो विकारस्त्वयि त्वदुपलक्षितजीवजाते । स माया । अन्यस्थ निर्मित देहादिस्थमेवासतः सत्तासंबंधरूपं जन्मादिकमाभिमानतो जीवे प्रतीयत इत्यर्थः । कुत इत्यतोऽस्वाभाविकत्वादित्याशयेन तदुपपादयति । यद्यस्याज्जन्मादिर्जीवस्याद्यपवर्गयोः सृष्टेरादिः प्रलयोऽपवर्गो मोक्षः प्रलयापवर्गयोर्न विद्यते किं त्वंतरा प्रलयमुक्त्योर्मध्ये कर्मवशादागच्छति । अतो न स्वाभाविक इत्याशयः । अयमर्थस्तवाप्यनुभवसिद्ध इत्याह ॥ जन्मादय इति । तस्य देहादेर्ये जन्मादयो दृश्यमानास्तेऽस्य चिदानंदस्वरूपस्य तव त्वत्स्वरूपस्य स्युः संति । किं संतीति त्वया ज्ञातं चेन्मां प्रति वदोपपादय । त्वत्सामर्थ्यं पश्याम इत्याशयः । तस्मादानंदादेरेव स्वाभाविकत्वं न जन्मादेरतो जन्माद्यभावरूपा मुक्तिर्युक्तेत्याशयेनोपसंहरति ॥ आद्यंतयोरिति । असतोऽस्वतंत्रस्य जगत आद्यंतयोः सृष्टेरादिः प्रलयोंऽतो मुक्तिः प्रलयमुक्त्योर्यज्जीवस्यास्ति चिदानंदादि तदेव मध्ये संसारेऽप्यस्तीति तस्यैव स्वरूपत्वं न जन्मादेरतोऽहं जात इति जीवे प्रतीयमानं तु जन्मादि देहाद्यभिमाननिमित्तं मदपरोक्षज्ञानेन निवर्ततेऽनंतरं मुक्तो भवतीत्याशयः ॥ ७ ॥ उद्धवो ज्ञानं विज्ञानं वैराग्यं मुक्तियोगं तत्साधनं च ब्रूहीत्याशयेन पृच्छति ॥ ज्ञानमिति । विपुलं पुष्कलं । पुराणमनादि । यथा कथमुत्पद्यते तथाऽऽख्याहि । महद्भिर्मृग्यं महात्मभिर्विचार्यं ॥ ८ ॥ घोरे भवाध्वनि । अमृताभिवर्षादमृतस्राविणः ॥ ९ ॥ अस्मिन्संसाराख्ये बिले । कालाख्याहिना दष्टं क्षुद्रसुखविषये उरुस्तर्षो यस्य तं । आपवर्ग्यैर्मोक्षसाधनैः ॥१०॥ अजातोऽनुत्पन्नः शत्रुर्यस्य स तथा । यद्वा । आद्यासाज्जाता दुर्योधनाद्यास्त एव शत्रवो यस्य स तथा युधिष्ठिरः ॥ ११ ॥ बहून्धर्मान् आपद्धर्मराजधर्मादीन्मोक्षधर्मानुद्दिश्य ॥ १२ ॥ देवव्रतो भीष्मः । ज्ञानादिके पृष्टे तदुत्तरत्वेन धर्माणां कथनमसंगतमित्यत उक्तं ॥ ज्ञानेति । ज्ञानरूपफलैरुपबृंहितान्पूर्णान् । तत्साधनभूतानिति यावत् ॥ १३ ॥ ज्ञानस्वरूपमाह ॥ नवेति । येन ज्ञानेन भूतेषु जीवेषु नवैकादशपंचत्रीन् भावान् ब्रह्मा प्रकृती रुद्रः स्कंदः पंचभूतानि नव । एकादशेंद्रियाणि पंचेति पंचकद्वयं । दशेंद्रियविषया दशेत्यर्थः । सत्त्वाद्या गुणास्त्रय इति त्रयस्त्रिंशत्संख्याकान् भावांस्तत्त्वानि य ईक्षेत विचार्येत । एवं तत्त्वगणना-

द्वाविंशाध्याये पुरुषः प्रकृतिरव्यक्तमहदहंकारो नभोऽनिल इत्यादिना स्पष्टं कृतमस्तीति मंतव्यं । अन्वनंतरमेषु हिरण्यगर्भादिषु प्रेरकत्वेन विद्यमानमेवैकं भगवंतं स्वतंत्रत्वमीक्षेत तन्मम ज्ञानमिति निश्चितमित्यर्थः ॥ १४ ॥ एतदेव ज्ञानमेव हि विज्ञान । ननु ज्ञानस्यैव विज्ञानत्वे वि शब्दो व्यर्थ इत्यत आह ॥ न तथेति । इदमन्यथाप्रतीतिनिरासाय सर्वं वाक्यं सावधारणमिति न्यायेन योजयति ॥ एतदेवेति । ज्ञानमेवेत्यर्थः । तथैव तत्त्वनियामकतया भगवज्ज्ञानमेव विज्ञानं न भवति किंतु सर्वज्ञगुरूपदिष्टस्वयोग्य-मूर्तिज्ञानसहितमेव ज्ञानं विज्ञानं। इत्युच्यत इति शेषः । तत्र प्रमाणमाह ॥ ज्ञात्वेति । पूर्वोक्त एव ज्ञान्येव स्वस्वयोग्यज्ञानं ज्ञायत इति व्युत्पत्त्या ज्ञेयं विशेषतो जानन्यः स विज्ञान्युत विज्ञान्यपि भवतीति योज्यं । न स्युरित्यन्यथाप्रतीतिनिरासाय योजयन्नन्वयं दर्शयति ॥ नस्तत्त्वानामिति । यदीत्येतद्योजयति ॥ यद्यत्रेति । यच्छब्दस्य तच्छब्देनान्वयं दर्शयति ॥ तदेवेति । सच्छब्दार्थं प्रमाणेनाह ॥ सत्त्वमिति । अपरेऽपरस्मिन् । तथा चैतदेव ज्ञानं विज्ञानं । तथाऽपि तथैव न किंतु स्वयोग्यज्ञानसहितमेव विज्ञान-मित्युच्यत इत्यर्थः । ननु भगवतोऽपि तत्त्वेष्वेकत्वात्कुतस्तस्य स्वातंत्र्यमित्यत आह ॥ एकेनेति । अस्मदुपलक्षिततत्त्वानां मध्य इति यावत् । येनैकेन तत्त्वेन यद्यत्र यदाधारत्वेन त्रिगुणात्मनां भावानां पदार्थानां स्थित्युत्पत्त्यप्ययाः स्युस्तदेव सत्स्वतंत्रं । तादृशश्चाहमेव नापर इत्याशयः ॥ १५ ॥ यत्तत्त्वमादावंते मध्ये सृष्ट्यादिकाले ज्ञं सर्वज्ञं यच्च सृज्य जगत्स्रष्ट्वा तत्प्रेरकत्वेनान्व-यात्प्रविशति । यच्च पुनस्तस्य प्रतिसंक्रमे प्रलये शिष्येतावशिष्येत तदेव सदिति योज्यं ॥ १६ ॥ एवं सर्वनियामकस्य हरेः स्वातंत्र्यं ज्ञेयमित्यत्र किं प्रमाणमित्यत आह ॥ श्रुतिरिति । ऐतिह्यमागमभेदः । इति चतुष्टयं भगवत एव स्वातंत्र्यमित्यर्थे । प्रमाण मस्तीति शेषः । एवं श्रुत्यादिप्रमाणेन भगवत्स्वातंत्र्यज्ञाने फलमाह ॥ प्रमाणेष्विति । अत्र विकल्पादित्येतद्व्याख्याति ॥ विकल्पा-दिति । सः सकलतत्त्वप्रेरकतया श्रुत्यादिप्रमाणकं भगवत्स्वातंत्र्यं जानन्विकल्पादहं कर्तेत्यादिजीवस्वातन्त्र्यज्ञानरूपाविरुद्धज्ञाना-द्विरज्यते विरक्तो भवति । मिथ्याज्ञानरहितो भवतीत्यर्थः । ननु जीवे स्वातंत्र्यमपि श्रुत्यादिप्रमाणकं चेत्कथं तज्ज्ञानस्य विरु-द्धज्ञानत्वमित्यत उक्तं ॥ प्रमाणेष्विति । जीवस्वातंत्र्यादेः श्रुत्यादिप्रमाणेष्वनवस्थानात्प्रतिपाद्यतयाऽवस्थानसद्भावस्याभावात्त ज्ञानस्य विरुद्धज्ञानत्वाख्यं विकल्पत्वं युक्तमित्यर्थः ॥ १७ ॥ वैराग्यसाधनमाह ॥ कर्मणामिति । आविरिंचाद्ब्रह्मलोकपर्यंत विद्य

मानानां लोकांना कर्मणां फलरूपत्वात् । षष्ठ्या अलुक् । कर्मसाध्यतया कर्मफलरूपत्वात् । अमंगलं पश्येत् । तथाऽदृष्टमपि स्वर्गादिसुखं दृष्टवन्नश्वरं पश्येत् । आब्रह्मस्तंभपर्यंतमसारं चाप्यनित्यकं । विज्ञाय जातवैराग्यो भवेदित्याशयः ॥ १८ ॥ त्वद्भक्तियोग इत्यस्योत्तरमाह ॥ भक्तियोग इति । प्रीयमाणाय श्रुत्वा संतोषं प्राप्नुवते । भक्तिकारणमाह ॥ पुनरिति ॥ १९ ॥ मेऽमृतकथायाममृतवज्जरामरणहारिण्यां कथायां परिनिष्ठा । अत्यापद्यपि नेम नियम मुंचामीति निश्चयः ॥ २० ॥ मदर्थेष्वहमे वार्थो येषां तानि तेषु । सर्वभूतेष्वित्यस्येदं विशेषणं । परमभागवतेष्वित्यर्थः । मन्मतिर्मत्सन्निहितत्वज्ञानं । अंगैः शरीरावयवैः । पादादिभिर्नृत्यलक्षणा चेष्टा । ईरणमुच्चारणं । कामेति निषिद्धकामेत्यर्थः ॥ २१ ॥ २२ ॥ मदर्थे मत्प्रीत्यर्थे निषिद्धभोगस्य निषिद्धसुखस्य च । इष्टमित्यादौ भावे क्तः । यद्व्रतं तपस्तत्सर्वं मदर्थं मत्प्रीत्यर्थे । कुर्यादिति शेषः ॥ २३ ॥ आत्मानिवेदिनां स्वात्मानं समर्पयितॄणां । अस्य पुंसः ॥ २४ ॥ यदा मयि हरौ सत्त्वगुणोपबृंहित तदभिवृद्धियुक्त शांत चित्तमर्पितं भवति तदा धर्मादिकमभिपद्यते प्राप्नोति ॥ २५ ॥ यदि तच्चित्तमिंद्रियैरिंद्रियद्वारा विकल्पे हरिविरुद्धे विषये परिधावति । तदा रजस्वल रजोदूषितमसन्निष्ठं तामसं विपर्ययमधर्माज्ञानावैराग्यानैश्वर्यसाधनं विद्धीत्यर्थः ॥ २६ ॥ धर्मादिकमभिपद्यत इत्युक्त । को धर्मादिरित्यत आह ॥ धर्म इति । मद्भक्तिकृद्यमनियमशमदमादिः । उद्धवशंकाप्रापकमिदं । एवमव्याख्याने यमः कति विध इत्याद्युद्धवप्रश्नोत्थापकाभावापत्तेरिति ध्येयं । गुणेषु विषयेषु । एकात्म्यदर्शनं जीवब्रह्मैक्यज्ञानमित्यन्यथाप्रतीतेः प्रमाणेनैव व्याकरोति ॥ एकमिति । तथा चैकश्चासावात्मा चैकात्मा तस्य भाव ऐकात्म्यं तद्दर्शनं । आत्मनो विष्णोरेकत्वदर्शनमिति यावत् ॥ २७ ॥ हे अरिकर्शन कामक्रोधाद्यरिषड्वर्गनाशक । तथा चारिषड्वर्गनाशकतया मद्भक्तिकृतत्वेनोक्तो यमनियमादिः कति विध इति प्रश्नार्थः ॥ २८ ॥ २९ ॥ यज्ञो यज्ञेन पूज्यः । श्रीमद्बल किं ॥ ३० ॥ ३१ ॥ प्रश्नान्प्रष्टव्यार्थान् । को विपरीतस्तं च ब्रूहि परिहारेण स्पष्टीकुरु ॥ ३२ ॥ अभयमित्यस्य पूर्वोत्तराभ्यां संबंधे यमत्वं नियमत्व च द्रष्टव्य । अन्यथा नियमानामेकादशत्वप्राप्त्या द्वादशत्वोक्त्ययोगात् । उभयोर्यमनियमयोर्द्वादशप्रभेदाः पुंसां पुंभिः । उपासिताः सेविता दुहति । फलानिति शेषः ॥३५॥३६॥ दंडन्यासो विहितदंडत्यागः । सर्वेषामभयदानमिति यावत् । स्वभावविजयः स्वमनोजयः समदर्शन

यथावस्तुदर्शनं ।। ३७ ।। सूनृता सत्या वाग्येव सर्वतृप्तिकरान्नमित्यर्थः । असंगो नाहं कर्तेति बुद्धिः । संन्यासो निषिद्धत्यागः ।। ३८ ।। भगवत्तमो ज्ञानिप्रधानोऽहमेव । यज्ञो यज्ञेनेज्य इत्यर्थः । ज्ञानसंदेशो ज्ञानोपदेशः ।। ३९ ।। मे ममैश्वरो भाव ईश्वरत्वभावनं भग इत्यर्थः । आत्मनि हरौ भिदाबोधो जीवादिभेदज्ञानं । विकर्मसु विरुद्धकर्मसु जुगुप्सा न्हीः ।। ४० ।। दुःखात्ययादात्यंतिकदुःखनाशाज्जायमानं यत्सुखं मौक्तं सुखं तदेव सुखमित्यर्थः । काम्यंत इति कामा विषयास्तेषां सकाशाज्जायमानं यत्सुख तदपेक्षया दुःखमित्यर्थः । देहादावहंबुद्धिमान् । मन्निगमो मद्विषयो वेदादिः । एष निष्कंटकः यथा यत्र संपूज्यते हरिरित्युक्तेः । तमो गुणस्योन्नाहोऽभिवृद्धिः । सखा गुरुः सखिभूतो गुरुभूतोऽहमेव बधुरित्यर्थः ।। ४३ ।। ईश ईश्वरो योऽजितेंद्रियो विषयासक्तबुद्धिः स कृपणो गुणसंगी विषयासक्तबुद्धिर्विपर्ययो विपरीत इति कृपणविपरीतयोर्भेदाभावः प्रतीयतेऽतः प्रमाणेनैव तयोर्भेदं दर्शयति ।। विषय इति । यथाऽऽस्तिककामुकादिः । गुणबुद्धिर्गुणेषु दोषबुद्धिं विहाय पुरुषार्थत्वबुद्धिमान्विपर्ययो विपरीत इत्यर्थः । विपरीतं स्वरूपं प्रमाणांतरेण दर्शयति ।। पुरुषार्थेति । यस्य देहिनो विषयेष्वेव पुरुषार्थमतिः पुरुषार्थत्वज्ञान ।। स्वात्मन इति । स्वस्य विपरीततो मोक्षादिविपरीतफलसंपादनादित्यर्थः । ननु तर्हि दरिद्रविपरीतयोर्भेदो न स्यात् । असंतुष्टो दरिद्रः । विषयेभ्यो न संतुष्टो भवति किंतु विषयेषु पुरुषार्थमत्याऽसक्त इति दरिद्रस्वरूपमुक्त । तस्य विपरीतस्वरूपेण सांकर्यं प्राप्नोतीत्यतस्तयोर्भेदं दर्शयति ।। वित्तेति । वित्तप्राप्तावपि तत्रासंतोषमात्रः संतोषमात्रशून्यः । तथा च वित्तविषय एवासंतुष्टो यः स दरिद्र इत्यर्थः ।। सर्वविषयेति । शुभाशुभविषयेत्यर्थः ।। ४४ ।। भगवानुत्तरग्रंथोपक्षेपाय गहाभिसंधिराह ।। किमिति । गुणदोषयोर्लक्षणं स्वरूपं । दुर्ज्ञानमिति शेषः । ननु कथं दुर्ज्ञानत्व । वेदविहितो गुणस्तन्निषिद्धो दोष इति सुज्ञानत्वादित्यत आह ।। गुणेति । गुणदोषदृशिर्वेदविहितो गुणस्तन्निषिद्धो दोष इति गुणदोषस्वरूपज्ञान । दोषो महाप्रत्यवायसाधनं । उभयोर्गुणदोषयोर्ज्ञानस्य वर्जनं गुणदोषपरित्याग एव गुणः शुभसाधनमित्यर्थः । तस्मात्त्वमयं गुणोऽयं दोष इति गुणदोषपरित्यागं कुर्वित्याशयः ।। ४५—४७ ।। इति श्रीभागवतटिप्पण्यामेकोनविंशोऽध्यायः ।। ११—१९ ।। ।।

।। हरिः ॐ ।। भगवद्वाक्याशयमविद्वानुद्धवस्तर्कयति ।। विधिश्चेत्यादिना । अयं भावः । गुणदोषस्वरूपज्ञानस्य दोष।

वहत्वं यद्यभिमेतं तर्हि वेदस्तावद्विधिनिषेधात्मकतया द्विविधः । तत्र विधिः कर्मणो गुणं सामीचीन्यमपेक्षते । एतादृशाश्रमवताऽस्मिन्देशेऽस्मिन्काले एतदर्थं समीचीनं कर्म कर्तव्यमिति । आश्रमद्रव्यदेशकालादींश्च निषेधश्च कर्मणो दोषमसामीचीन्यमपेक्षतेऽसमीचीनं कर्म न कर्तव्यमिति । तत्र गुणदोषस्वरूपज्ञानस्य वर्जनीयत्वे प्रतिपाद्याभावप्राप्तेर्विधिनिषेधात्मकशास्त्रवैयर्थ्यं स्यान्न चैवमतो गुणदोषज्ञानमपेक्षितमिति त्वदुक्तमसदिति तर्कार्थः ॥ अक्षरयोजना त्वित्थं ॥ विधिश्च प्रतिषेधश्चेत्येवं रूपस्ते न्वत्संप्रदायप्राप्तो निगमो वेदो वर्णाश्रमयोर्विकल्पं प्रभेद । अपेक्षत इति सर्वत्र सबध्यते ॥ १ ॥ प्रतिलोमानुलोमजमधिकारिणां ब्राह्मण्यां शूद्राज्जातः प्रतिलोमजः स चांडालः सोऽनधिकारी । ब्राह्मणाद्ब्राह्मण्यां क्षत्रियस्त्रियां वाऽनुलोमजः सोऽधिकारी । इदं जातिविवेकग्रथे स्पष्ट । धर्मार्जितं द्रव्यं । कृष्णमृगसंचारयुक्त देशं । यत्र देशे मृगः कृष्णस्तत्र धर्मान्निबोधतेति स्मृतः । कालो वसंतादिः । पुण्यफलभूतं स्वर्गं । पापफलभूतं नरक ॥ २ ॥ सशयबीजं दर्शयति ॥ गुणेति । एवमुक्तरीत्या वेदो गुणादिकमपेक्षते । त्वदीय वचनं तु गुणदोषभेदज्ञानमंतरेणास्ति । अयं गुणोऽयं दोष इति भेदेन तत्स्वरूपज्ञानं दोषावहत्वमित्युच्यते । अतः संशय इत्यर्थः । गुणाद्यनपेक्ष एवास्तु वेद इत्यत आह ॥ गुणेति । गुणदोषभिदा दृष्टिमंतरेण विद्यमानं । तदनपेक्षमिति यावत् ॥ ३ ॥ ते निषेधविधिलक्षण वचस्त्वत्संप्रदायप्राप्तं विध्याद्यात्मक वेदवचनं कथं नृणां नैश्रेयसं मोक्षसाधनं स्यात् । कुतो निःश्रेयसाधनत्वं वेदस्येत्यत आह ॥ पित्रिति । हे ईश्वर । तव वेदोऽनुपलब्धेऽर्थेऽप्रत्यक्षेश्वरधर्मादिविषये साध्यसाधनविषययोः साध्ये सुखादौ विषये साधने कर्मादौ विषये श्रेयो दिव्य चक्षुर्ज्ञानसाधनमतो वेदस्य तद्वारा युक्तं नैश्रेयसत्वमिति भावः ॥ ४ ॥ उपसंहरति ॥ गुणेति । यतो वेद उत्तमं चक्षुस्तेन कारणेनाधिकारिणो बोधयितुं गुणदोषाभिदा दृष्टिर्नियमान्नियमेन स्वतः स्वभावत एव वेदेनापेक्ष्यते । तर्हि वः संशयः कुत इत्यतो विप्रतिपत्तेरित्याह ॥ नियमेनेति । त्वया च भिदाया गुणदोषभिदाज्ञानस्य नियमेनैवापवादो निराकरणं गुणस्तूभयवर्जनमित्यनेन कृतमिति हेतोर्विप्रतिपत्त्या मे भ्रमो मम मनसो भ्रामणं संशयो भवतीत्यर्थः ॥ ५ ॥ एवमुद्धवेन तर्किते योगास्त्रय इत्यादिना कथमसंबद्धं कथ्यत इति चेदुच्यते ॥ योगास्त्रय इत्यादिना । आशयोद्घाटनेन परिहारः क्रियते । हे उद्धव । गुणदर्शिर्दोष इति मदुक्तस्याभिप्रायमज्ञात्वा त्वया तर्कितमिति । भगवदुक्तस्य

कोऽभिप्राय इत्यतः प्रमाणेन तदभिप्राय भगवानाचार्यो दर्शयति ।। स्वत इत्यादिना । अयमभिप्रायः । अधिकारिण उत्तमास्तदतिरिक्ताश्चेति द्विविधाः । तत्र गुणदोषदर्शिर्दोष इत्यस्य वेदविहित एव गुण इति ज्ञात्वा तत्कर्तव्यं । वेदनिषिद्ध एव दोष इति ज्ञात्वा तत्परित्याज्यमित्येवं गुणदोषस्वरूपदर्शिर्दोषावह एव । कुत इति चेत् । वेदविहितस्यापि भगवदप्रीतिसाधनत्वे दोषवत्त्वदर्शनात् । यथा सत्यपूतं वदेद्वाक्यमिति वेदविहितत्वेऽपि तस्मिन्सत्यवचन एव रतः कौशिकाख्यो ब्राह्मणो हि लीन ग्रामजनं कांचित्तस्करेष्वभिधायैव निरयं प्रत्यपद्यत । तथा सत्यभाषणपरायणो धर्मराजोऽश्वत्थामा हत इति वक्तव्यमिति कृष्णेनोक्तस्तथेत्युक्त्वाऽप्युपांशुकुंजर इत्याह । ततः कृष्णवाक्येऽविश्वासेन किंचिद्दुःखमनुभूतं । तथा वेदनिषिद्धं दोषत्वेन ज्ञात्वा तत्परित्यागो न कर्तव्यः । वेदनिषिद्धस्यापि भगवत्प्रीतिसाधनत्वे गुणत्वदर्शनात् । यथा ब्राह्मणो न हंतव्य इति ब्राह्मणहननस्य निषिद्धत्वेऽपि वृत्रासुरवधस्य भगवत्प्रीतिसाधनत्वेन गुणत्वदर्शनात् । यथोक्तं गीताभाष्ये ।। वृत्रहत्याद्यपि तस्य गुण एव तस्य न लोम च मीयत इति श्रुतेरिति ।। इंद्रो वै वृत्रं हत्वा महानभवदिति च श्रुतेः । यथा वाऽग्रजविवाहात्पूर्वमनुजाविवाहस्य निषिद्धत्वेन हिडिंबया प्रयुक्ते भीमो व्यासवाक्यात्तां परिजग्राह । तस्माद्देशकालवयोऽवस्थादिकमनपेक्ष्य भगवत्प्रीतिकर एव गुणस्तदप्रीतिकर एव दोष इत्युत्तमज्ञानिनो गुणदोषस्वरूपं जानंति । अज्ञस्य त्वेवमवजानतो देशादिकमपेक्ष्य वेदविहितो गुणस्तन्निषिद्धो दोष इति वेदतो मर्यादा कृता । अतो वेदविहितमात्र गुणस्तन्निषिद्धमात्रं दोष इत्येव गुणदोषस्वरूपज्ञानमुत्तमज्ञानिनां दोषावह न त्वज्ञानामिति ममाभिप्रायः । त्वं त्विममभिप्रायमज्ञात्वा गुणदोषवर्जनमात्रमभिहितमिति मत्वा तत्सापेक्षविधिनिषेधात्मकशास्त्रवैयर्थ्यं तर्कितमिति छलेन निग्रहस्तवेति । ज्ञानिनं प्रत्येवमापादने ह्याप त्तिरिति हृदयं ।। प्रमाणाक्षरार्थस्तु ।। स्वत इत्यादि स्वरूपकथनं । अन्यत्सर्वं विष्णुव्यतिरिक्तं देशादि भगवत्प्रियत्वाद्गुण इत्यर्थः । तथा विष्णोरप्रियं दोष इत्यर्थः । ज्ञानवतामुत्तमज्ञानिनामेवं दृष्टिर्दर्शनमुत्तमज्ञानिन इत्थं जानतीत्यर्थः । देशादिकं विहाय वेदविहितमस्त्वविहितं वाऽस्तु पर विष्णुप्रीत्यप्रीतिकरावेव गुणदोषाविति तन्मतमिति भावः । अविज्ञानवतोऽज्ञानिनः कालदेशविशेषेषु विष्णोः प्रीतिभेदं प्रीतिविशेषं । उपलक्षण । अप्रीतिविशेषं चावेक्ष्य वेदतो मर्यादा कृता । अस्मिन्देशे काले च विष्णोः

प्रीत्यर्थं वेदविहितो गुणस्तन्निषिद्धो दोष इति तदेव कार्यं। नान्यदित्यज्ञानिना वेदविहितं हरिप्रीत्यर्थमेव देशादिविशेषं कर्तव्यं। ज्ञानिना तु भगवत्प्रियमेव कर्तव्यं। तदप्रियं त्याज्यं तद्वेदविहितं वाऽस्तु निषिद्धं वास्तु वेदापेक्षयैव नास्तीत्याशयः। अतो ज्ञानवतो भगवत्प्रियं भगवदप्रियं चांतरा विहाय गुणदोषभिदा तत्स्वरूपभेदज्ञानं नास्ति तत्स्वरूपं न जानंतीत्यर्थः। गुणदोषदृशिर्दोष इत्यस्य भावमाह ॥ गुणेति। ज्ञानिनो भगवत्प्रियादप्रियाच्च प्रियत्वाप्रियत्वाभ्यामन्यत्र वेदविहितो गुणस्तद्विरुद्धो दोष इति गुणदोषस्वरूपदर्शोर्ज्ञानात्तद्दोषः प्रत्यवायः। कुत एवमित्यत आह ॥ गुणाश्चेति। गुणाः सत्यवचनाद्या वेदविहिता ईयुः। भगवदप्रीतिहेतुत्वे दोषा वेदनिषिद्धा वृत्रहत्याद्या गुणतामीयुः। भगवत्प्रियत्व इत्यर्थः। दोषो वृत्रहत्यादिर्भगवत्प्रियत्वे न दोषः स्यात्। गुणः सत्यवचनादिर्गुणो न भवेत् भगवदप्रियत्वे प्रीतिविज्ञानादप्रीतिज्ञानाच्च गुणदोषभिदां यदि पश्येत्तर्हि तद्दर्शनं गुणाय शुभाय भवति। विपर्यासं भगवदप्रीतिकरो गुणः प्रीतिकरो दोष इति। उपसंहरति ॥ गुणेति। स्वातंत्र्येण भगवत्प्रीत्यप्रीतिमंतरा वेदविहितमात्रं गुणस्तन्निषेधो दोष इत्येवं रूपेणेत्यर्थः। न हि ज्ञेया दोषावहत्वादित्याशयः। प्रमाणांतरमाह ॥ स्वतस्त्विति। वस्तूनां सत्यवचनवृत्रवधादीनां स्वतः स्वातंत्र्येण भगवत्प्रीतिमंतरा भेदेन वेदविहितत्वादिमात्रेण गुणदोषन्वदर्शोर्ज्ञानाद्दोषो भवति। अथ भगवत्प्रीतितो दोषो गुण एव स्यात्। तद्वैपरीत्यात्। तदप्रीतितो गुणोऽपि दोष एव स्यादिति योज्य। इति दृष्ट्या एवं ज्ञानेन गुणः शुभः पुरुषार्थो भवतीत्यर्थः। तर्हि वेदविहितो गुणस्तन्निषिद्धो दोष इति कथमित्यत आह ॥ कालेति। देशकालविशेषेषु प्रीत्यज्ञानादस्मिन्देशे काले इदं भगवत्प्रियमिदमप्रियमिति ज्ञानस्याज्ञानिनोऽभावाज्जगत्स्थितेर्हेतोर्जगतः प्रवृत्याद्यर्थं सर्वशः सर्वत्र वेदेषु गुणदोषाणां वेदविहितो गुणस्तन्निषिद्धो दोष इति मर्यादा कृतेत्यर्थः। एवं भगवद्वाक्याभिप्रायत्वे एतदाशयप्रकटनं मूले न दृश्यते। अतो योगास्त्रय इत्याद्यसंगतमेवेत्यत आह ॥ एतदेवेति। अस्माभिः प्रमाणेनोपपादितमित्यर्थः। इति मूले उच्यत इत्यन्वयः। अयमधिकारस्तुभ्यं दत्तोऽय तवानधिकार इति भगवता दत्तत्वे न तदाज्ञारूपतया तत्प्रीतिहेतुभूते स्वे स्वे स्वकीये स्वकीयेऽधिकारे भगवदाज्ञया निष्ठा स्थितिः स गुणो भगवत्प्रीतिकरत्वाद्विपर्ययोऽनधिकारे स्थितिर्दोषः स्याद्भगवदप्रीतिसाधनत्वादित्येवं गुणदोषस्वरूपयोर्निर्णयः। न तु वेदविहितो गुणस्तद्विरुद्धो दोष इति तत्र कस्य कोऽधिकारः कश्चानधिकारो ययोर्निष्ठौ गुणदोषा-

वित्यतो योगास्त्रय इत्यादिना तत्पूर्वग्रंथेनाधिकारादिक निरूप्यत इति नासंगतिस्तस्येति भावः। योगा मोक्षसाधनोपाया नृणां मोक्षयोग्यानां। तानि दर्शयति ॥ ज्ञानमिति। अन्यो ज्ञानाद्यन्यः ॥ ६ ॥ ज्ञानयोगाधिकारिणमाह ॥ निर्विण्णानामिति। इह जगति कर्मसु कर्मकरणविषये निर्विण्णानां न्यासिनां ज्ञानयोगो ज्ञानयोगाधिकारः। कर्माधिकारिणमाह ॥ तेष्विति। कर्मस्वित्यर्थः। अवैराग्यचित्तयुक्तानां कर्मिणां कर्मयोगाधिकारः। भक्तियोगाधिकारिणमाह ॥ यदृच्छयेति। न निर्विण्णः कादाचित्कवैराग्यशून्यः। सर्वदा विरक्त इति यावत्। नातिसक्तः कादाचित्कविषयासक्तिमान्न भवति। नित्य-संपूर्णभोगत्वादिति भाव इत्याहुः। भक्तियोगिभिरपि भक्त्याद्युत्पत्तेः पूर्वमंतःकरणशुद्धिद्वारा भक्त्यादिसाधनत्वेन कर्मयोगः कर्तव्य इत्याहुः ॥ तावदिति। देवादित्वयोग्यानां मनुष्याणामिदं ज्ञातव्य। यद्वा। कर्मयोगिनमेव विशिनष्टि ॥ तावदिति। अत्र ज्ञानादियोगिन उक्तास्ते के इत्यतः प्रमाणेनैव तद्विविच्य दर्शयति ॥ सनकाद्या इत्यादिना। ज्ञानयोगा ज्ञानयोगवंतः। एवं भक्तियोगाः कर्मयोगा इत्यपि व्याख्येयं। ननु सनकादीनां ज्ञानयोगित्वे भक्तिकर्मणोरभावः प्राप्नोति। कर्मिणां ज्ञानभक्त्य-भावः। भक्तियोगिनां ज्ञानकर्माभावः प्राप्नोतीत्यत आह ॥ सर्वेषामिति। नन्वेवं सांकर्यमित्यत आह ॥ तथाऽपीति। स स योगः। तथा च स्वसमानाधिकरणगुणानां मध्ये ज्ञानानामाधिक्यविवक्षया ज्ञानयोगित्वाद्युक्तिरित्याशयः ॥ भगवदिति। स्वयं प्रत्यक्षेण भगवद्गुणान्दृष्ट्वा स्वस्वदृष्टभगवद्गुणानुसारेण यैर्वेदार्थो नीयते मयाऽयं गुणो दृष्ट एतद्गुणस्य प्रतिपादकोऽयं वेदभागस्तस्मा-द्वेदभागात्तद्गुणस्य सम्यक् प्रतिपाद्यताया अलाभे यथा तत्प्रतिपादकः स्यात्तथा व्याख्यानेन तन्निगमन व्याकुर्वतीत्याशयः। के ते इत्यत आह ॥ तादृशा इति। अंग शिक्षाकल्पादिषडंगं। तदनुसारतोऽगानुकूल्येनागाद्यनुसारेण वेदार्थं परोक्षतो ज्ञात्वा तत्तद्भगवद्गुणप्रतिपादकत्वेन वेदो यैर्नीयत इत्याशयः। सुराणां त्वंगाद्यानुकूल्येन वेदयोजनेन तात्पर्यमिति भावः ॥ कर्माणीति। प्राधान्येन प्रतिपाद्यतयेति शेषः। अनेन वेदेन तादृशं कर्म प्रतिपाद्यत इति कर्मणः प्राधान्येन प्रतिपाद्यत्वं ज्ञात्वा एतादृशकर्म णेज्यो हरिर्यज्ञभोक्तृत्वाद्येतादृशगुणयुक्त इति वेदः प्रतिपादयतीति वेदार्थो नीयत इत्यर्थः। प्रतिपाद्यतयाऽर्थो ज्ञातत्वमेवात्र कर्मणां प्राधान्यमिति मंतव्यं। अपि यद्यपि तेषु कर्मयोगिषु पश्चात्कर्मणाऽतःकरणशुद्ध्यनतरं। तथा च तेऽपि भक्तियोगा

ज्ञानयोगाश्चेति शेषः ॥ कर्मपूर्वत्वेति । कर्मज्ञानस्य पूर्वसंपादितत्वरूपात्कारणादित्यर्थः । वेदेन प्रतिपाद्यतया पूर्वं कर्म तैर्ज्ञातमिति कर्मयोगिनस्त इत्यर्थः । भगवद्गुणेष्वनुरागः स्नेहस्तद्वत्वं । भक्तिरिति यावत् । अधिकं ज्ञानकर्मयोग्यपेक्षया । स्वसमानाधिकरण-गुणानां मध्य इति शेषः । ते देवा एषु त्रिविधयोगिषु । ननु न निर्विण्ण इति वैराग्याभाव उक्तः । नातिसक्त इति वैराग्य-मुच्यत इति विरोध इत्यतस्तं परिहरति ॥ ईषदिति । ईषद्वस्तुविषयक । अत एवाल्पं स्वसमानाधिकरणगुणेष्वपरोक्षज्ञाना-त्पूर्वमल्पमेव वैराग्यं जायते पश्चादपरोक्षज्ञानोत्पत्तिसमयेऽनंतरं वा देवानां विरागो वैराग्यमप्यधिकं जायते। उपसंहरति ॥ ज्ञानेति । यदा भक्त्याधिक्यं तदा ज्ञानाधिक्यमपि प्राप्तमेव ज्ञानस्य भक्तिभागत्वादित्याशयः । सदोत्पत्तिमारभ्य सनकादीनां । ननु तर्हि ज्ञानयोगित्वं भग्नमित्यत आह ॥ ज्ञानेति । मनुष्येभ्यः कर्मयोगिभ्यो ज्ञानाधिक्यात् । मनुष्यग्रहणकृत्यमाह ॥ न त्विति । मनु-ष्याणां प्रत्यवायत्वात् । विधिचकिततया प्रवर्तनादित्यर्थः । सर्वेभ्यः सकाशात्त्रियोगैर्ज्ञानकर्मभक्त्याख्यैराधिको ब्रह्मेत्यर्थः ॥ ७—९ ॥ मूलार्थस्तु । ननु कर्मणां बंधकत्वेन कथं भक्तिज्ञानकरणत्वमित्याशंकां परिहरति ॥ स्वधर्मस्थ इति । स्वाविहित-कर्माचरणवान् । अनाशीः कामः स्वर्गाद्याशीः कामो न भवतीत्यनाशीः । अन्यत्काम्यनिषिद्धं च कर्म तर्हि न याति ॥ १० ॥ एवं धर्मस्थः स्वविहितधर्मवान् लोके शरीरे । एतं भूमौ विद्यमानं लोकं मानुष देहं । कीदृशमित्यत आह ॥ साधकमिति । निरयिणो नरकस्था नरकशेषं भुंजाना वा भूमौ कुयोनिं प्राप्य ज्ञानभक्तिभ्यां । तज्जननद्वारेति यावत् । पुरुषार्थसाधकमित्यर्थः । कुत इत्यत आह ॥ उभयमिति । स्वर्गनरकलोकद्वयं तदसाधकं ज्ञानभक्तिद्वारा पुरुषार्थसाधकं । यत इति शेषः ॥ १२ ॥ विचक्षणो बुभूपुर्नरः । नारकीं च गतिं । इमं लोकं मनुष्यलोकं । कुतः । देहवशाद्देहप्रववेशाद्देहेऽभिमानादिप्रवेशात् । प्रमाद्यति भगवद्विषयकप्रमादयुक्तो भवतीत्यर्थः ॥१३॥ मृत्योर्मरणरूपात्पूर्वं मृत्योरभावाय मोक्षाय घटेत यतेत । मर्त्यं मरणशीलमपीदं शरीरं पुरुषार्थसिद्धिदं ज्ञात्वा यतेत ॥ १४ ॥ ततः किमित्यत आह ॥ छिद्यमानमिति । यथा खं गच्छतीति खगः पक्षी स्वकेतनं स्वाश्रयं वृक्षं परेण छिद्यमानं ज्ञात्वा स्वनीडे आसक्तिं त्यक्त्वा गतश्चेत्क्षेमं याति । अन्यथा न । एवं खैरिंद्रियैर्गच्छतीति खगो जीवोऽहोरात्रादिकालावयवैः कृतं नीडं यस्मिंस्तत्कृतनीडमत एव स्वस्य केत निकेत वनस्पतिं तत्स्थानीय देहमुत्सृज्य क्षेमं मोक्ष-

मलपटो लपटो विषयाकांक्षावान्न भवतीत्यलपटः । प्रसिद्धपक्षी त्वलं सम्यक् पटः प्लवनसमर्थः । पट गताविति धातुः ॥ ३५ ॥ इदमेव विशदयति ॥ अहोरात्रैरिति । आयुरायुष्यं मुक्तसंसारसंगः परं हरिं निरीहो निषिद्धचेष्टाशून्यो व्यर्थचेष्टाशून्यो वा । उपशाम्यति शांतदुःखो भवति । प्रसिद्धोऽपि पक्षी स्वाश्रयं वृक्षं छिद्यमानं ज्ञात्वा भयेनान्य वृक्षं स्वागंतव्यत्वेन बुध्वा पूर्ववृक्षे संगं त्यक्त्वाऽन्य वृक्षमाश्रित्य सुखी भवतीति ॥ १६ ॥ पुमान्मानुषदेहमासाद्य न प्रमादी स्यादित्याह ॥ नृदेहमिति । सुकल्पं सुष्ठुकल्पं कल्पवृक्षवदभीष्टसाधनं प्लवं नाव गुरुरेव कर्णधारो नाविको यस्य तथा तं । कर्णधारस्तु नाविक इत्यभिधानात् । मया मल्लक्षणेनानुकूल्येन । तृतीयाया अलुक् । अनुकूलवायुनेरित प्रेरितं । अत्र मार्गेण इति लुप्तोमेत्याशयेन तात्पर्यमाह ॥ मार्गण-वदिति । अयोमयतीक्ष्णाग्रभागशून्यः क्रीडार्थं कृतवर्तुलाग्रभागः शिरोमार्गणोऽत्र विवक्षितः । स यथा परस्मिन्मुक्तस्तच्छेदना-दिकमकृत्वा वृथैव भूमौ पतति । एवमयमपि शरीरांते तत्पतनानंतरं वृथा नरके पतति । वृथैव तस्य जन्मेत्याशयः ॥ १७ ॥ भगवज्ज्ञाने इदमपरपर्यायो मनोनिग्रहः कारणमिति भावेन मनोनिग्रहप्रकारमाह ॥ यदेति । आरंभेषु कार्योपक्रमेषु विघ्ने जाते निर्विण्णः । वौ । विः पक्षिपरमात्मनोः । परमात्मनि रक्तोऽनुरक्तः स्नेहवान् आत्मनः स्वस्य मनः । अचलमिति क्रियाविशेषण ॥ १८ ॥ धार्यमाणं भ्राम्यत् । तस्यैव विवरणं । आश्वेकत्रानवस्थितं चेतद्वनुरोधेनानुकूल्येन मार्गेण प्रत्याहारप्राणायामादिना ॥ १९ ॥ मनोगतिं मनोवेगं भगवतोऽन्यत्र न विसृजेत् । सत्त्वसपन्नया सत्त्वगुणोद्रिक्तया ॥ २० ॥ एष मनसः संग्रहो निग्रहः परमयोगो मोक्षसाधनोपायः । भगवज्ज्ञाने इदमपि साधनमित्याह ॥ हृदयेति । हृदयं ब्रह्मेत्यारुणय इति श्रुतेः । हृदयज्ञत्वं ब्रह्मज्ञानवत्त्वमन्विच्छन्यस्तस्येच्छतः पुंसो दमो मनोव्यतिरिक्तेंद्रियनिग्रहश्च मुहुर्मुहुः कर्तव्य इत्यर्थः ॥ २१ ॥ मनो वशं नयेदि-त्युक्तं । यावद्वशं न भवति तावत्पर्यंत किं कार्यमित्यत आह ॥ सांख्येनेति । ज्ञानेन सर्वभावानां सर्वतत्त्वानां प्रतिलोमानुलोमतो व्युत्क्रमक्रमाभ्यां भवाप्ययौ हरेः सकाशादनुध्यायेत् । यथायोग्यसंबंधो न यथाक्रमं । अनुलोमतोऽनुक्रमेण । भव उत्पत्तिः । प्रतिलोमतो व्युत्क्रमेण नाशो भवतीति चिंतनं कुर्यादिति भावः । कियत्पर्यंतमित्यत आह ॥ मन इति ॥ २२ ॥ एवं ध्यानेन किं भवतीत्यत आह ॥ निर्विण्णस्येति । विरक्तस्य परमात्मनि रक्तस्य । आत्मवेदिनः क्रमव्युत्क्रमाभ्यां भवाप्ययकृतन्वेनात्मज्ञानिनः ।

दौरात्म्यं कामादिकश्मलं । महात्मभिश्चिन्तितस्य हरेरनुचिंतया ॥२३॥ एतैरुपायैः शुद्धं मनो हरिं स्मरतीत्याह ॥ यमादिभिरिति । योगपथैर्योगमार्गैरान्वीक्षिकया विद्यया तत्त्वविद्यया । ममार्चेत्यत्र बुद्ध्या विवेकः । अर्चायां ममोपासनादिभिः पजादिभिः शुद्धं मनः । योग युज्यतेऽनेनेति योगो हरिस्तं स्मरेत् । अन्यैर्यमादिव्यतिरिक्तैर्न स्मरेदित्यर्थः ॥ २४ ॥ योगाभ्यासिनः प्रमादिकपापपरिहारायोपायमाह ॥ यदीति । अंहो विगर्ह्यकरणनिमित्तकं पापं । तत्र पापपरिहारेऽन्यत्प्रायश्चित्तादिसाधनं योगाभ्यासवता कंचन न कार्यमित्यर्थः ॥ २५ ॥ एवमुपयुक्तमभिधायेदानीं भगवानाशयोद्घाटनेनोद्धवप्रश्नं परिहरति ॥ स्वे स्व इति । एव ज्ञानभक्तिकर्मरूपे स्वे स्वे स्वकीये भगवता प्रीतिपूर्वकं दत्तेऽत एव तत्प्रीतिकरे या निष्ठा भगवदाज्ञारूपत्वेन भगवत्प्रीतिकरोऽयमिति वा । स्थितिः स गुणो विपर्ययो हर्यप्रीतिकरे स्वानधिकारे या निष्ठा स दोषः । उभयोर्गुणदोषस्वरूपयोः । एव यदि भगवत्प्रीतिकर एव धर्मस्तदप्रीतिकर एव दोषः स वेदविहितोऽस्तु मा वा । तर्हि वेदविधानस्य वैयर्थ्यमेव स्यादित्यतो ज्ञानवतामेव तथा । अज्ञानां तु वेदविधिरपेक्षित एवेति न वैयर्थ्यं ॥ २६ ॥ तत्कथमित्यत आह ॥ कर्मणामिति । अत्र जात्यशुद्धानामित्येतद्व्याकुर्वंस्तस्यांहसामित्यनेनान्वयभ्रांतिं च निवारयति ॥ स्वत इति । पदानां व्यवहितत्वादन्वयं दर्शयति ॥ अनेनेति । कोऽर्थ इत्यत आह ॥ स्वत इति । कर्मणामित्यस्य पूर्वोत्तराभ्यां संबधः । गुणत्वं हरिप्रीतिसाधनत्व । विध्यनुसारेणानुष्ठानं भगवत्प्रीतिरूपो गुणो न च दोष इति विधानेन नियमो वेदेन कृतः । एवं कर्माणि विध्युक्तरीत्या हरिप्रीत्यर्थं कर्तव्यानीत्यज्ञान्प्रति वेदो नियामयतीत्यर्थः । किमर्थमित्यतोऽहसामित्युक्तं । मनोदोषाणामित्यर्थः । एवमनुष्ठितकर्मणा हि मनोदोषनिवृत्तिः । कर्मणा शुद्धसत्त्वस्येत्युक्तेः । एतत् श्लोकद्वयतात्पर्यं स्वतः सर्वेत्यादिना प्रागेव भगवत्पादैरभिहितमिति द्रष्टव्यं ॥ २७ ॥ ननु मनोदोषाणां रागादीनां त्यागः कथं भवतीत्यतस्तत्प्रकारमाह ॥ जातेत्यादिना । मत्कथासु जातश्रद्धः कामान्विषयान्दुःखात्मकान्दुःखापादकान्यद्यपि वेद तथाऽप्यनीश्वरोऽसमर्थः । यदेति शेषः ॥ २८ ॥ ततस्तदा जुषमाणः सेवमानः । जुषी प्रीतिसेवनयोः । जोषणसमये गर्हयन् ॥ २९ ॥ मा मामसकृद्वारंवारं भजतो मुनेर्हृद्यंतःकरणे । कदेत्यत उक्तं ॥ मयि हृदि स्थिते सतीति । ध्यानविषये सतीत्यर्थः ॥ प्रायो ध्यानसपत्त्यनंतरं नश्यंतीत्यर्थः ॥ ३० ॥ समूलनाशः कदेत्यतोऽपरोक्षज्ञानोत्तरमित्याह ॥

भिद्यत इति । अत्र हृदयस्य ग्रथिरित्यन्यथाप्रतीतिनिरासायानूद्य व्याचष्टे ॥ हृदयेति । अंतःकरण प्राकृतं भिद्यते विदीर्येते । भिदृ॒ विदारणे । कर्माण्यारब्धान्यनभीष्टानि च । अखिलस्यात्मन्यंतर्यामिणि ॥ ३१ ॥ उपसंहरति ॥ तस्मादिति । मय्यात्मा मनो यस्य स मदात्मा तस्य । अत्र न ज्ञानादित्यादिना ज्ञानादेः श्रेयःशब्दोक्तमोक्षसाधनत्वाभावप्रतीतिर्योजयति ॥ मद्भक्तीति । यावत्या भक्तेर्यावत्ज्ञानं वैराग्य वा योग्यं तावत्संपाद्याल्पज्ञानाद्वैराग्याच्च स्वयोग्याच्छ्रेयो न भवतीत्याशयः ॥ भक्त्यनुसारीति । यावत्या भक्तेर्यावद्योगं तावदित्यर्थः। ज्ञान च वैराग्यं च ज्ञानवैराग्ये । अन्यस्माद्भक्त्यननुसारिणः ॥३२॥ भक्तियोग स्तौति ॥ यत्कर्मभिरिति । योगेन प्राणायामादिलक्षणेन ध्यानेन वा यत्फलं तत्सर्वं फलं स्वर्गसहितमपवर्गं मद्धाम मत्सन्निधानस्थल यदि वांच्छति तर्हि मद्भक्तियोगेन तदपि लभेत इत्यन्वयः । अत्र स्वर्गवांछायां भक्तियोगेन तदपि लभेत इत्युक्ते भक्तियोगवंतो देवा एव तेषां स्वर्गादिरागवत्त्वे वैराग्याभावेन मोक्षप्रतिबंधः स्यादित्यत आह ॥ रागिणोऽपीति । स्वर्गादिरवस्वपदादिकामनावंतोऽपीत्यर्थः । वैराग्यशून्या अपीति यावत् । यथोक्तं । देवादीनामादिराज्ञां महाद्योगेऽपि नो मनः । विष्णोश्चलति तद्भोगो ह्यतीव हरितोषणमिति । एवं तर्हि देववद्रागिणामपि सनकादीनां ज्ञानयोगिनामस्तु मुक्तिस्तथा च रागोऽभ्यधिकस्तेषां सदैव सनकादीनामित्युक्तमयुक्तमित्यत आह ॥ रागेति । विषयरागेत्यर्थः । वैराग्यार्थमिति यावत् । ज्ञानमाब्रह्मस्तंबपर्यंतमसारं चाप्यनित्यकामिति सारासारविवेकज्ञानमित्यर्थः । एवं तर्हि विषयेषु दोषस्मरणमपि सनकादिभिरेव वैराग्यार्थं कर्तव्यं न तु देवैरिति तत्राह ॥ स्मर्तव्या इति ॥ न त्विति । स्वर्गादिविषयेष्वनित्यत्वादिदोषस्मरणेन तत्त्यागो यतिवन्न कार्य इत्यर्थः । न त्वित्युक्तस्यापवादमाह ॥ हरिरिति । इतरे सर्वेऽपि विषया असारा एको हरिरेव सारोऽतः स एव पूज्य इत्येवमर्थमेव देवैरपि दोषाविषयेषु स्मर्तव्या न तु परित्यागायेति । इदं प्रमाण स्ववाक्येन व्याचष्टे ॥ वैराग्यार्थमिति । अपि शब्दाद्धरिः सारतया पूज्य इत्येवमर्थं चेति लभ्यते । अनेन स्मर्तव्या इति प्रमाणे वैराग्यार्थमपीति शेषः पूरित इत्यवगंतव्यं । द्वितीयार्धतात्पर्यमाह ॥ देवाना तदपीति । अपि शब्दस्तु शब्दार्थे । देवानां तु तद्विषयदोषादिज्ञान । साग्ता श्रेष्ठता । एव शब्दान्न वैराग्यार्थमिति सूचयति । रागित्वेपि तेषा मोक्षप्रतिबंधाभावस्य देवादीनामादिराज्ञामिति मानसिद्धत्वादित्याशयः ॥ ३३ ॥ ३४ ॥ भक्तियोगार्थे एकांतभक्तास्थति

कथयति ॥ न किंचिदिति । मम भक्ता दत्तं दीयमानमपुनर्भवं पुनर्भवशून्यं कैवल्यं मोक्षं न वांच्छंति चेत्किं प्राहुरित्यत आह ॥ नैरपेक्ष्यमिति । कुत्रापि स्वर्गेऽपवर्गे वा यन्निरपेक्षं तदेव परं मुख्यमकल्मषं निष्पापं निःश्रेयसं प्राहुः । निरपेक्षत्वमेव निःश्रेयसःस्थानीयं तेषामित्याशयः । उपसंहराति ॥ तस्मादिति । निराशिषो विषयकामनाशून्यस्य सकाशात् । नैरपेक्षस्य विरोधं परिहराति ॥ विरागेऽपीति । नैरपेक्ष्यरूपगुणयुक्तस्य भक्तस्य भक्तिरेवानंदरूपिणी फलरूपा भवेदित्यर्थः ॥ ३५ ॥ ३६ ॥ गुणदोषोद्भवा गुणा वेदविहितकरणरूपगुणतनिषिद्धकरणरूपदोषजन्या गुणदोषाश्चेति ग्राह्यं । शुभाशुभफलानीति यावत् । न संतीत्यर्थः । विधिचकिताः संतो नाचरतीत्यत्र तात्पर्यं बुद्धेः प्रकृतेः परमुत्तमं हरिमुपेयुषां प्राप्तुकामानामित्यर्थः ॥ ३७ ॥ अत्रैकांतिनो यदि स्वर्गादि वांछंति तर्हि लभंत इति वांछामुक्त्वा न किंचिद्वांछंतीति तदभावश्च कथ्यते । अतो विरोधं परिहरति ॥ रागिणोऽपीति । स्वर्गापवर्गादिवांच्छावत्त्वेनोक्ता अपि ते न भक्तियोगिन एकांतिनः किमपि स्वर्गादि नापेक्षंत इति विरोधपरिहाराय भक्तिफलत्वेनेत्युक्तं । अस्मत्कृतभक्तेरिदं फलं हरिणा दीयत इति बुद्ध्या तन्न स्वीकुर्वंति । अस्मदनुष्ठितभक्त्यादिसाधनजातस्य भगवद्भक्तिरेवोद्देश्याद्दीयमानमपवर्गादिकं तु भगवदाज्ञारूपत्वेनैव तूर्ष्णीं स्वीकुर्वंति । तदाज्ञाकरणस्यापि तत्प्रीतिसाधनत्वात् । न तु भक्तिफलत्वेन सर्वमन्यत्तदर्थकमित्युक्तेरित्याशयः । अत्र प्रमाणं चाह ॥ यदीति । न गृण्हीयुः । किं तु भगवदाज्ञारूपतया तत्प्रीतिसाधनत्वेनैव गृण्हीयुरित्यर्थः । तेषां विषयभोगोऽप्येवमेवेत्याह ॥ कामिनोऽपीति । स्वस्वपदकामनावंतोऽपीत्यर्थः । विरागेऽपि विशेषेण रागे सत्यपि कामान्स्वर्गादिविषयान् ॥ फलंति । अस्मदनुष्ठितभक्त्यादेरिदं फलं स्वर्गादिकमिति स्वकृतभक्त्यादिसाधनफलं न भुंजते । किं तु भगवत्प्रीतिकरत्वेनैवेत्याशयः ॥ विराग इति । सत्यपि कामे सत्यपि विषयभोगे आसक्त्यभावादित्यर्थः । एतादृशा एकांतिनः । पूर्वं ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योस्ति कुत्रचिदित्युक्तं । तत्रोद्देशक्रमानुसारेण भक्तियोगस्य नीचत्वं प्रतीयते । तस्यैव च सर्वोत्तमत्वं प्रतिपादितमतो विरोध इत्याशंक्योद्देश्यक्रमानुसारेण तारतम्यमत्र विवक्षितमित्याशयेन तत्त्रयाणां तारतम्यज्ञापकप्रमाणमाह ॥ उत्तम इति । तेषां भक्तियोगिनां यन्नियतं मोक्षसाधनं तया क्लृप्तमधिकं यज्ज्ञानं तद्भगवद्भक्त्योदेति प्रकटं भवति । भक्तिप्राकट्यानुसारेण ज्ञानमपि प्रकट भवतीत्याशयः । तद्वद्भक्तियोगवत् । नाज्ञानं भक्त्यादिनोदेतीत्यर्थः ।

ननु भक्तियोगिनां कुत उदेति ज्ञानयोगिनः । कुतो न । तेषामपि भक्तेः सत्वादित्यत आह ॥ भक्तीति । भक्तेरश एवांशकं । ततोऽपि किमित्यत आह ॥ ज्ञानेति । सा भक्तिर्माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः । स्नेहो भक्तिरिति प्रोक्त इत्युक्तेः । एवं च यदा देवानां भक्त्याधिक्यं सिद्धं तदा ज्ञानाधिक्यं प्राप्तमेव । न हि तथा भक्त्याधिक्यं ज्ञानयोगिनामस्ति । येन ज्ञानाधिक्यमपि भवेदित्याशयः । ननु यदि ज्ञानाधिक्यं कथ तर्हि ते ज्ञानयोगिन इत्यत आह ॥ तथाऽपीति । यद्यपि न देवापेक्षया । ज्ञानमधिकमिति शेषः । तत एवं भक्तियोगस्येतरयोगद्वयापेक्षयोत्तमत्वादित्यर्थः ॥ ३५—३७ ॥ भगवान्योगत्रयफलकथनेनोपसंहरति ॥ एवमिति । आदिष्टाननुपदिष्टान्पथो मोक्षमार्गान् ये । त इति शेषः । येऽनुतिष्ठंति यत्परमं ब्रह्म ज्ञानिनो विदुस्तस्य मन्मम क्षेमं क्षेमकरं मत्स्थानं वैकुंठादि तद्विंदंति प्राप्नुवंतीत्यर्थः ॥ ३८ ॥ इति श्रीभागवतटिप्पण्यां विंशोऽध्यायः ॥ ११—२० ॥ ॥

॥ हरिः ॐ ॥ अत्र कर्मयोगिनां देशादिशुद्धिकथनपूर्वकं कर्मकरणप्रकार निरूपयति । तत्र पूर्वाध्यायांते एवमेतानिति मोक्षमार्गानुष्ठानफलमुक्तं तदनुष्ठाने फलं तावदाह ॥ य एतानिति । मत्पथो मत्प्राप्तिमार्गान् । भक्तिज्ञानक्रियात्मकान् । भक्तियोगज्ञानयोगकर्मयोगाख्यान् । चलैर्नश्वरैः प्राणैरिंद्रियैर्जुषंतः सेवंतः ॥ १ ॥ कर्मकरणे द्रव्यादिशुद्ध्यशुद्ध्योरपेक्षितत्वेन तत्स्वरूप ज्ञेयमित्यतो यथा भगवत्प्रीतिकर एव गुणस्तदप्रीतिकर एव दोष इति गुणदोषस्वरूपं भगवत्प्रीत्यप्रीतिबधनमेव भगवत्संनिधानविशेषयुक्तमेव शुद्धं वस्त्वितरदशुद्धमिति वक्तुं पूर्वोक्तगुणदोषस्वरूपं स्मारयति ॥ स्वे स्व इति । अधिकारे हरिप्रीतिकरे । व्याख्यातं चैतत् । हरिप्रीतिकरो गुणस्तदप्रीतिकरो दोष इति फलितोऽर्थः ॥ २ ॥ यदर्थं गुणदोषस्वरूपोक्तिस्तदाह ॥ शुद्धीति । अत्र विचिकित्सार्थं धर्मार्थमित्यनयोस्तात्पर्यमाह ॥ विवेकेनेति । गुणदोषावित्यस्यान्वयं दर्शयति । गुणेति । ननु समानेष्विति कथं । वस्तुतारतम्यस्य प्रमाणसिद्धत्वादित्यत आह ॥ पचेति । ननु समानत्वे कथ शुद्ध्यशुद्धीत्यत आह ॥ हरिसंनिधाति । विशेषः शुद्ध्यादिरूपः । सर्ववस्तुष्विति वर्तते । तथा च पंचभूतात्मकत्वेन समानेष्वपि वस्तुषु मध्ये द्रव्यस्य शुद्ध्यशुद्धी हरिसान्निधानविशेषतदभावाभ्या विधीयेते । यथा गुणदोषौ भगवत्प्रीत्यप्रीतिकरौ ज्ञातव्यौ । इदं कथं ज्ञेयमित्यतो विधीयेत इत्युक्तं । वेदविहित एव प्रीति-

करत्वेन गुण इतरो दोष इत्यज्ञैर्ज्ञातव्यमिति भावः । एवं च शुद्ध्यशुद्धी तथा शुभाशुभे ग्रामगमनसमये पूर्णकुंभाद्यागमन शुभं । एकब्राह्मणागमनमशुभमिति शुभाशुभे च विधीयेते। तदानीं हरिसन्निधानतदभावाभ्यां किमर्थं विधीयेत इत्यत उक्तं ॥ विचिकित्सार्थमिति । सनंत शब्दस्य विचारेऽपि जिज्ञासितं सुसंपन्नमित्यादौ प्रयोगदर्शनाद्विवेकार्थमिदं शुद्धमिदमशुद्धमित्ययं गुणोऽयं दोष इतीदं शुभमिदमशुभमिति विचारार्थमित्यर्थः ॥ ३ ॥ विवेकज्ञानेनानापि किमित्यत उक्तं ॥ धर्मार्थमिति । विवेकेन पुण्याधिक्यं भवतीति तदर्थमित्यर्थः । इदं शुद्धमिदमशुद्धमित्यादिव्यवहारार्थं । तज्ज्ञानाभावे तत्साध्यव्यवहारायोगात् । यात्रार्थं देहयात्रार्थं । शुद्धगुणाः शुभान्येव सेव्यानि नाशुद्धा दोषा अशुभानीत्येवमर्थमित्यर्थः। यात्रार्थं प्राणयात्रार्थं शुभाशुभौ विधीयेते इत्यर्थ इत्यप्याहुः । न केवलमेव वेदविहित किं नामेत्यत आह ॥ दर्शितोऽयमिति । धर्म्यं धर्मसाधनं । धुरं भारमुद्वहतां । धर्मप्रवर्तकेन मयेति यावत् । आचारो धर्मशास्त्राख्योऽपि दर्शितः । तथा चैवं स्मृत्याऽपि विहितमस्तीत्याशयः ॥ ४ ॥ द्रव्यस्य शुद्ध्यशुद्धीत्युक्तं विशदयति ॥ भूमीत्यादिना । तत्र पूर्वश्लोके ब्रह्मादीनां शरीरप्रकृतत्वात् । धातुशुद्ध्येत्यस्य शरीरधातुशुद्ध्येत्यर्थ इत्यन्यथाप्रतीतिपरिहाराय धातु शब्दार्थमाह ॥ धातुरिति । धारकत्वादिति भावः । य उ त्रिधात्विति श्रुतेः । ननु तर्हि तस्य शुद्धिर्नाम केति चेत्। शुचिमत्वमेवेति ब्रूमः। परमेश्वरस्य शुचितमत्वज्ञापनार्थमित्यर्थः। ननु कथमनेन शुचितमत्वं हरेर्ज्ञापितमित्यत आह॥ यद्यदिति । हरेरिति कर्तरि षष्ठी । हरिणेत्यर्थः । तत्तच्छुद्धमिति ग्राह्यं । यच्च हरिणा विशेषतः सान्निहितं तच्छुद्धतरमिति योज्यं । यथेतरद्धरिणा सन्निहितत्वाच्छुद्धमित्युच्यते । एवं हरिरप्यनेन सन्निहितत्वाच्छुचितमो नेत्याशयेन स्वत इत्युक्तं । ननु हरिसन्निधानेनेतरच्छुद्धं स्वतः शुद्धो हरिरेवेति चेत्तर्ह्यग्न्यादिः स्वतो हरिसन्निधानेन विना शुद्ध इत्यादि न स्यादित्याशंकां प्रमाणशेषेण परिहरति ॥ सानिध्य चेति । तथा चाग्न्यादौ स्वाभाविकं सानिध्यमेवास्तीति युक्तं शुद्धत्वादीत्यर्थः। उत्तरत्रैतद्विवृतं भविष्यति । एतेषां भूम्यादीनामित्यन्यथाप्रतीतिनिरासायार्थमाह ॥ एतेषामिति । तथा चाब्रह्मस्थावरादीनां भूतानां प्राणिनां शरीराः शरीरस्था भूम्यादयः पंचधातवः पंचभूतानि यद्यप्यात्मना हरिणा संयुताः सन्निहिताः सर्वेऽपि भवंति । भगवतः सर्वत्र व्याप्तत्वात् । तथाऽपि समेषु तेषु भेदेन नामरूपाणि । कदलीफलादिकं शुद्धं । वृंताकादिकमशुद्धमिति नामभेदः । वर्तुलत्वादिरूपभेदः।

एवं भेदेन नामरूपाणि हरिसान्निधिवैशेष्येण शुद्धशुद्धतरत्वादितरतमभावोपेतानि विकल्पंते ज्ञायंते । कुत इत्यत उक्तं ।। धात्विति। धातुः परमेश्वरस्य शुद्ध्यै शुचितमत्वज्ञापनाय । इतरद्धरिसन्निधानेन शुद्धं शुद्धतरं च । परमेश्वरस्तु स्वतः शुद्ध इति ज्ञापनार्थमित्यर्थः । तेनापि किमित्यत उक्तं ।। एतेषामिति । जीवानां तज्ज्ञानेन स्वार्थस्य मोक्षादेः सिद्ध्ये प्राप्त इत्यर्थः ।। ५ ।। ६ ।।
तत्र देशादिशुद्धिः कथं ज्ञेयेत्यत आह ।। देशेति । भावानां पदार्थानां श्रुतिस्मृतिरूपान्मम वचनाद्गुणदोषावेतादृशो देशादिर्भगवत्प्रीतिकर एतादृशो नेति गुणदोषौ कर्मणां नियमार्थमेतादृशे देशे एतादृशे काले कर्म कर्तव्यमिति नियमनं कर्तुं विधीयेत इत्यर्थः ।। ७ ।। कीदृशा देशाः शुचिकरा इत्यत आह ।। कृष्णसार इति । ब्राह्मणानां कर्मकरणार्थं कृष्णसारमृगो देशानां शुचिकरो भवेदित्यर्थः । कृष्णसारोऽयं देशमधिवसति स देशः शुचिरिति भावः । अस्यापवादमाह ।। कृष्णसार इति । मतुपो लोपेन । अर्श आद्यजंतत्वेन वा । कृष्णसारः कृष्णसारमृगवान्देश इति व्याख्येयं । सौवीरकीकटासंस्कृतेरिणः । अत्र कीकटासंस्कृत शब्दार्थं प्रमाणेनाह ।। नदीत्यादिना । आश्रमा ऋषीणां । कर्मण्याः कर्मकर्तुं योग्याः। तदन्येऽपि कीकटान्येऽपि ।। खल इति । न तु बलादानीय तत्र स्थापित इत्याशयः । खलैरित्युक्त्या खलाध्युषितो देशोऽसंस्कृत इत्युच्यत इत्युक्तं भवति । तथा च सौवीरकीकटासंस्कृतेरिणा भिन्नः कृष्णसारवान्देशः कर्मण्य इत्यर्थः । ईरिणो लवणोत्पत्तिस्थानमुपद्वीपादि । सान्निध्यं च स्वभावत इति प्रमाणशेषोक्तं सिंहावलोकनन्यायेन प्रमाणांतरेण विवृणोति ।। आतर इति । क्रमेणोदाहरणमाह ।। प्रतिमेति । प्रतिमागतः सन्निधिः कृत्रिमः । सर्वजीवांतर्गतः सन्निधिः स्वाभाविक इत्यर्थः । कीदृशः कालः कर्मण्य इत्यत आह ।। काल इति । द्रव्यतः पुष्पफलादिद्रव्यतो गुणवान्समृद्धिमान्वसंतादिकालः स्वतो गुणवान् । संध्यावंदनादिकाल इति द्विविधः कालः कर्मण्य इत्यर्थः । कः कालोऽकर्मण्य इत्यत आह ।। यत इति । यस्मिन्काले च यतो दोषात्कर्म निवर्तेत निशीथत्वादिदोषात्कर्म न क्रियत इत्यर्थः । सदोपस्तादृशदोषयुक्तः कालोऽकर्मकोऽकर्मण्य इत्यर्थः ।। ८ ।। ९ ।। द्रव्यस्य शुद्ध्यशुद्धिप्रकारोऽपि बहुधेत्याह ।। द्रव्यस्येति । ताम्रादिद्रव्यस्याम्लादिद्रव्येण शुद्धिर्भांडादिद्रव्यस्यामेध्यादिद्रव्यसंबंधेनाशुद्धिः । महतां वचनेन शुद्ध्यशुद्धी । यथाऽलांबुनो यतिपात्रत्व । भक्ष्यत्वं च प्रक्षालनादिसंस्कारेण शुद्धिः । असंस्कारेणाशुद्धिः । कालेन म्लेच्छोपितगृहस्य म्लेच्छापगमा-

नंतरं बहुना कालेन शुद्धिः। न तु तदपगमानंतरमेव। अन्नादेर्यामादिकालांतरितत्वेऽशुद्धिः। अन्नादेर्महत्वे शुनकादिस्पर्शे स्पृष्टांशस्य त्यागेन शिष्टस्य शुद्धिः। अन्नस्याल्पत्वे शुनकस्पर्शेऽशुद्धिः ॥ १० ॥ शक्तस्य तीर्थयात्रादिना शुद्धिः। क्षयरोगादिनाऽशक्तस्याशुद्धिः। हरिकथाश्रवणादौ यदि बुद्धिस्तर्हि तया शुद्धिः। सुरापानादिबुद्ध्याऽशुद्धिः। समृध्या सपदा। आत्मनः शुद्ध्यशुद्धी। सत्यां संपदि सत्पात्रदाने शुद्धिरसत्पात्रदानेऽशुद्धिः। अन्ये मांसाः सोमाश्च विंध्यादुत्तरदेशे मांसाः शुद्धाः। दाक्षिणदेशेऽशुद्धाः। आर्यावर्ते स्वसुः पुत्रस्य कन्यादाने तस्याः कन्याया अशुद्धिः। दक्षिणदेशे शुद्धिः। यौवनावस्थायामशुचिस्पर्शेऽशुद्धिर्बाल्ये तु शुद्धिः। यज्ञकरणावस्थायां सोमः शुद्धो नान्यदेत्यर्थः ॥ ११ ॥ रसो घृतादिः। तैजसं कांस्यादि। पार्थिवानां पृथिवीविकाराणां धान्यादीनां युतायुतैः कालादिभिः शुद्धिः। धान्यानामयुतेन केवलैकेन कालेन शुद्धिः। दारुपात्राणामस्थ्नां शंखादीनां च युताभ्यां मृत्तोयाभ्यां शुद्धिः। ततूनामयुतेनैकेन तोयेन। आज्यादिरसानां तैजसां कांस्यादीनां चायुतेनाग्निना। चर्मणां युताभ्यां मृत्तोयाभ्यामिति विवेकः ॥ १२ ॥ अमेध्यलिप्तवस्तुनः शुद्धिप्रकारमाह ॥ अमेध्येति। यद्वस्तु येन यावता शौच्येन प्रकृतिं शुद्धस्वभावं तत्तस्य शौचं शुद्धिकरं ॥ १३ ॥ कर्मांगशुद्धिप्रकारमाह ॥ स्नानेत्यादिना। अवस्था कौमाररूपा। कौमार आचरेत्प्राज्ञ इत्युक्तेः। वीर्यं शक्तिः संस्कार ऊर्ध्वपुंड्रादिसंस्कारः। कर्म संध्यावंदनादि। एतैस्तथा मम स्मृत्या चात्मनो मनसः शौचं शुद्धिं संपाद्य शुद्धः सन् कर्म यज्ञव्याख्यानाद्यभीष्ठ कर्म आरभेदित्यर्थः ॥१४॥ कर्मणः कथं शुद्धिरित्यत आह ॥ मत्रस्येति। कर्मांगमंत्रस्य ऋष्याद्युपेतत्वपरिज्ञानं संपाद्य मय्यर्पणं च कर्तव्यं। तथात्वे कर्मणः शुद्धिरित्यर्थः। एवं मदर्पणादिकरणे सद्भिर्धर्मः संपाद्यते। विपर्ययैरसद्भिर्मदर्पणाद्यकरणेऽधर्म एव संपाद्यत इत्यर्थः ॥१५॥ हरिप्रीतेरेव प्रधानत्वाद्भगवदर्पणादेश्च तत्साधनत्वादवश्यं कर्तव्यतेत्याशयेन तस्याः प्राधान्यमुपपादयति ॥ क्वचिदिति। गुणोऽपि वेदविहितोऽपि भगवत्प्रीतिसाधनत्वे दोषः स्यात्। यथा सत्यवचनादिविधिना ब्राह्मणो न हंतव्य इति निषेधविधायकवाक्येन दोषतया प्रतीयमानो ब्राह्मणहननादिभगवत्प्रीतिसाधनत्वे गुण एव यथा वृत्रहत्या। गुणदोषाभ्यामर्थस्य स्वर्गनरकादिफलस्य नियमो यः स तद्विदां तौ गुणदोषौ विदंति जानंतीति तद्विदस्तेषामेव बाधते क्लेशकारी भवति। गुणदोषौ तत्फलं च ज्ञात्वाऽपि ये नानुतिष्ठति तानेव बाधत इत्याशयः।

अत्र तद्विदामेवेत्यवधारणेन मूर्खाणां गुणदोषाज्ञाने बाधो नास्तीति प्रतीयतेऽतो व्यावर्त्यं दर्शयति ॥ तद्विदामेवेति । ननु कुत एवं । ये मूर्खा गुणदोषाज्ञानिनस्तेषामदोष इति कस्मान्न स्यादित्यतो ज्ञान्यपेक्षया प्रत्युत गुणदोषाज्ञानिन एव महाननर्थ इति स्मृत्या दर्शयति ॥ वर्षादिति । कर्मजाद्ब्रह्महत्याद्यशुभकरणेन यावान्दोषस्तस्माद्दोषाद्ब्रह्महत्यादिकं निषिद्धमित्यज्ञानजो दोषो महानित्यर्थः । न तिर्यगादीनामिति तेषामदोष इत्युक्त तत्कुत इत्यत आह ॥ तिरश्चामिति । तिर्यगादीनामिंद्रियाणां कर्मकरणेऽशक्तेरपटुत्वात् सत्यपींद्रियपाटवे गुणदोषाद्यज्ञाने दोष इत्युच्यते । अस्तीदं मनुष्याणां न तिरश्चामित्यर्थः । स्यात्तिरश्चामिति वर्तते इति च प्रमाणमस्ति यतोऽत इत्यर्थः ॥ १६ ॥ बाधाभावप्रकारं वक्ति ॥ समानेति । तदनूद्य व्याचष्टे ॥ समानेति । तथा चापतितानामिति पदच्छेदः । अपतितानां समीचीनानां ब्राह्मणादीनां समानकर्माचरणे स्वविहितकर्माचरणे पातक पापं नास्तीत्यर्थः । पतितानामित्यपि पदच्छेदमभ्युपेत्य योजनांतरमाह ॥ पूर्वमिति । पूर्वमपतित इत्युक्त्या पूर्वयोजनां सूचयति । येन सुरापानादिना दोषेण प्रायश्चित्तत्वेन । प्रायः पापं विजानीयाच्चित्तं तस्य विशोधकमिति वचनात् । तत्पापपरिहारार्थत्वेनेत्यर्थः ॥ तत्समानेति । सुरापानसमानेत्यर्थः । किं तत्समानं प्रायश्चित्तरूपं कर्मेत्यत आह ॥ तप्तेति । सीसमयीं तप्तां सुरां कृत्वा तत्पानेन देहत्यागे सुरापानप्रायश्चित्तं । ज्वलितायोमयस्त्र्यालिंगने परस्त्रीगमनप्रायश्चित्तमित्यादि । तथा च पतितानां सुरापानादिकर्मणा पतितानां तत्प्रायश्चित्तत्वेन तत्समानकर्माचरणे तप्तसुरापानेन पातक सुरापानजन्यपातकं न भवतीत्यर्थः । न शयानः पतत्यध इत्येतदन्यथाप्रतीतिपरिहारायापेक्षिताध्याहारेण व्याचष्टे ॥ तथेति । न पतत्यधो ब्राह्मणादीनां पातकैः पातित्यजनकैः । कुत इत्यत उक्तं ॥ गुणे सग औत्पत्तिक इति । तत्तात्पर्यमाह ॥ औत्पत्तिक इति । तस्य शयानस्य तादृशगुणसंगो लशुनभक्षणादिविषयसंग औत्पत्तिकः स्वाभाविकस्तज्जातिस्वभाव एवेत्यर्थः । तर्हि शयानः कथं पततीत्यत आह ॥ अन इति । स्वयोग्ये त्रिवर्णशुश्रूषादिस्वयोग्यकर्मभिन्ने कर्मण्याचरिते सति अधः पततीत्यर्थः । शयान शब्दवाच्यत्वं शूद्रस्योपपादयन्नुक्तार्थे प्रमाणमाह ॥ त्रैवर्णिक इति । संनरतः । इत्युच्यंत इति शेषः । वेदकर्मण्यप्रवर्तनात् । शयनकर्तृनिष्ठप्रवृत्त्यभावरूपगुणयोगेन शूद्रे शयान शब्दो गौण इत्याशयः । अभक्ष्यजो दोषो ब्राह्मणादिभिर्यदभक्ष्यं लशुनादि तद्भक्षणजो दोष इत्यर्थः । शुश्रूषायामिति हेतुगर्भविशेषणं । अभक्ष्यभक्षणं

कृत्वाऽपि त्रैवर्णिकशुश्रूषा कर्तव्याऽन्यथा सा न सिद्ध्येदित्याशयः । नन्वेकस्य लशुनादेर्ब्राह्मणादीनां पातित्यहेतुत्वं शयानानां तदहेतुत्वं चेति द्वयं विरुद्धमित्यत एकस्योभयस्वभावत्वमविरुद्धमित्यत्र दृष्टांतमाह ॥ यथेति । शुक्रं सीसं सुवर्णस्य मलं दोषकारि । सीससंबंधे सुवर्णं नश्यति । ताम्रस्य न मल । तस्य तत्संबधे वर्णाधिक्यमेव भवतीत्येवमेकस्य शुक्रस्योभयरूपत्वमविरुद्धमित्यर्थः । तद्वत्प्रकृतेऽयमप्यविरोध इत्याह ॥ एवमिति । विप्रादीनां दोषैर्दोषकरैर्लशुनादिभिर्दोषितां दोषवत्तां । एकस्य लशुनस्याप्युभयरूपत्वमविरुद्धमिति भावः । स्वधर्मप्रतिकूलाचरणस्य शूद्रं प्रति दोषत्वे त्रैवर्णिकसाम्यापत्तिरित्यतः सत्यमिति तत्र दृष्टांतमाह ॥ मलमिति । अमेध्यभक्षण ब्राह्मणपातित्यहेतुभूतमिति शूद्रेण तद्भक्ष्यमिति न किंतु यन्मलमशुद्धादि तद्ब्राह्मणस्य । तस्यापि शूद्रस्यापीत्युभयोरपि मलं पातित्यहेतुत्वे वेति यथा साम्यमित्यर्थः । स्वधर्मः शुश्रूषण । ननु लशुनादिभक्षणेऽपि दोषो नास्तीत्युक्तं तत्र सच्छूद्रस्यापि लशुनभक्षणेऽपि दोषो नास्तीति प्राप्तमत आह ॥ शूद्रस्यापीति । न शयानः पतत्यध इत्येतद्धरिदीक्षारहितशूद्रविषयमिति भावेन प्रमाणमाह ॥ शूद्रस्यापीति । कुत इत्यत उक्तं ॥ स हीति । सच्छूद्र इत्यर्थः ॥ १७ ॥ उत्तरश्लोकस्यासंगतिपरिहारायावतारयति ॥ सर्वतोऽपीति । पूर्वमपतितानां स्वयोग्यकर्माचरणे पातकाभावः पतितानां प्रायश्चित्तत्वेन तत्समानकर्माचरणे पातकाभाव उक्तः । इदानीं किं बहुना सर्वत्राप्यभिमानं त्यक्त्वा सर्वस्यापि भगवदर्पणे क्रियमाणे समस्तपापविनिर्मुक्तिर्मोक्षश्च भवतीत्याहेत्यर्थः । तथा च यतो यतो यत्र कर्मण्यह कर्तेति कर्तृत्वाभिमानान्निवर्तेत । स्वस्य कर्तृत्वाभिमानं परित्यज्य हर्यर्पणबुद्ध्या कर्म कुर्यादिति यावत् । तर्हि ततस्ततो हर्यर्पणबुद्ध्या कर्म कुर्यादिति यावत् । तर्हि ततस्ततो हर्यर्पणबुद्ध्या कृतात्कर्मणः सकाशाद्विमुच्येत मुक्तिं प्राप्नुयात् । तदेवाह ॥ एष इति । निवृत्तधर्म इत्यर्थः । अत्र गीतासंमतिं चाह ॥ मयि सर्वाणीति । आदि पदेन मुच्यंते तेऽपि कर्मभिरित्यंतं वाक्यं ग्राह्य । तथा च सर्वतोऽपीत्याद्यर्थे इदं मानमिति बोध्यं । नाहं कर्ता हरिः कर्ता तत्पूजा कर्म चाखिलमिति तात्पर्योदाहृतप्रमाणादेतदर्थो मंतव्यः ॥१८॥ अधिकारिणा स्वर्गादिविषयेष्वपीच्छा न कार्येत्याशयेन प्रवृत्तं विषयेष्वित्यादिश्लोकचतुष्टयं प्रमाणेनान्यथाप्रतीत्यादिपरिहाराय व्याचष्टे ॥ दोषिण इत्यादिना । दोषिणो विषया इति सामानाधिकरण्यं । दोषिणः पुरुषस्येति वा । तेषु

विषयेषु गुणध्यानाद्गुणवत्त्वध्यानात् । नित्यमिति मूले शेष उक्तो भवति । तथा च विषयेषु दोषवत्सु असतां संगतेर्नित्य गुणवत्त्वेन ध्यानात् । सुदुर्लभा इति कुत इत्यतो नित्यं तेऽसंतो विषयं शुभमित्येवाहुः ।* तत्तद्गतदोषान् अतो श्रोतुं सुदुर्लभा इति भावः । पुंसः संगः प्रीतिर्विषयेषु भवेदित्यर्थ उक्तो भवति । संगात्तत्र भवेत्काम इत्येतद्व्याचष्टे ॥ अत इति । संगादित्यर्थः । तत्र विषयेषु । कामादेव । कलिर्नृणामित्यस्यार्थमाह ॥ कामिनामिति । अधर्मेत्यादि मूले शेषपूरणं । कलेर्दुर्विषहः क्रोध इत्यस्यार्थमाह ॥ कलिनेति । तमस्तदनुवर्तत इत्यस्यार्थः ॥ तत इति । तमसेत्यादेरर्थमाह ॥ अध इति । व्यापिनीत्यस्यार्थः ॥ इंद्रियेति । चेतना शब्दार्थः ॥ सुखेति । तथा च तमसांऽधंतमसा व्यापिनींद्रियेषु व्याप्ता सती । स्थिता या चेतना सुखानुभवशक्तिः सा द्रुतं शीघ्रं ग्रस्यते विनश्यतीत्यर्थ उक्तो भवति । तया चेत्यादेरर्थमाह ॥ तदेति । सुखानुभवशक्तिनाशे सतीत्यर्थः । शमिति मकारांतमव्ययं । शस्य ऊनं शूनं तस्य भावः शून्यं । तथा च तया चेतनया रहितः पुमान् शून्याय सुखराहित्याय कल्पते सुखरहितो भवतीत्यर्थः । किंचिद्वा सुखं तस्य भवति किमित्यपेक्षायामुक्तं ॥ ततोऽस्य स्वार्थविभ्रंश इति । तदर्थमाह ॥ सर्वात्मनेति । तथा च ततः शून्यत्वानंतरमस्या मूर्छितस्य जाग्रदवस्थायुक्तस्य मृतस्य । मृत्यनंतरमेवेति यावत् । स्वार्थस्य सुखस्य विशेषेण सर्वात्मना भ्रंशो नाशो भवतीत्यर्थ उक्तो भवति । स्वार्थविभ्रंश इत्यस्यार्थांतरमाह ॥ दुःखविवर्धन इति । अनेनायमर्थः कथं लब्धस्त प्रकारमाचार्यो दर्शयिष्यति । तमोगतस्यावस्थानप्रकार वक्तुं प्रवृत्तं विषयाभिनिवेशेनेत्यादि तद्व्याचष्टे ॥ दुःखाख्येति । कदाचन कदाऽपि यथावन्न वेत्तीति संबंधः । वृक्षजीविकया जीवन्नित्यस्यार्थः ॥ वृक्षवदिति । व्रश्च छेदन इति धातोः । यथा वृक्षः छिद्यते एवं यमकिंकरैरयं छिद्यत इति भावः । व्यर्थं जीवन्नित्यस्यार्थः ॥ निष्प्रयोजनजीवन इति । ग्रस्तवया इत्यस्यार्थः ॥ नित्येति । मूले शेषः पूरितोऽनेनेति ज्ञेयं । तथा च नित्यदुःखेन ग्रस्तवया इत्यर्थः । श्वसन्नित्यस्यार्थः ॥ दतिवत्प्रश्वसतीति । दृतिर्भस्त्रा दुःखविवर्धन इति व्याख्यानमक्षरैर्दर्शयति ॥ स्वार्थस्येति । विभ्रंश इत्यत्रत्यस्य भ्रंश शब्दस्य बुद्ध्या विवेकेन स्वार्थशब्देन संबधः । ततो वीत्यस्य सबंधः । भ्रंशः सर्वात्मना नाशः। वीत्यस्यार्थः ॥ विपरीतमिति । दुःखमित्यर्थः । आतिशयेनेति वीत्यस्यार्थांतरं । एतत् श्लोकचतुष्टयसाध्यमाह ॥ तस्मादिति । यतो विषयध्यानस्यैवमनर्थहेतुत्व तस्मादित्यर्थः । नेच्छत

इच्छां न कुर्यात् । विषयेष्वित्येव वक्तव्ये स्वर्गादीति विशिष्यग्रहणमुत्तरग्रंथोपक्षेपाय कृतमिति मंतव्यं ॥ १९—२२ ॥ ननु यदि स्वर्गादिविषयेच्छा न कर्तव्या तर्हि ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादौ स्वर्गकामनाया विधानमयुक्तमित्यत उच्यते ॥ फलश्रुतिरित्यादि । तत्प्रमाणेन व्याचष्टे ॥ फलेति । मोक्षाख्येत्यर्थः । अनेन फलश्रुतिरित्येतत्सावधारणमित्युक्तं भवति । तद्व्यावर्त्यं दर्शयति ॥ नेति । न वैकेनाक्षरेणेति साधु । श्रुतिफलस्येति वा पाठः । काम्यत इति कामः स्वर्गादि । तल्लक्षणकुसुमश्रुतिर्न भवति । कुतो नेत्यत आह ॥ स्वर्गादीति । तत्रापि स्वर्गादावपि कथं युंजादित्यादेस्तात्पर्यं ॥ ततस्तमसीत्यादि । तत्स्वर्गादिकं । अभिचक्षीत । ईषदुत्तमान्प्रतीति शेषः । असंगतिपरिहाराय न इत्यादिकमनूद्यार्थमाह ॥ न इत्यादि । सकाशात् । प्राप्यामिति शेषः । रोचयति तत्राभिरुचिं जनयति । फलश्रुतिर्ज्योतिष्टोमेन यजेतेत्यादिका । कथमनेन तद्रोचनमित्यत आह ॥ कुसुमस्येति । कुसुमभूतस्वर्गस्येत्यर्थः । ननु श्रोतुरनेकविधत्वात्कः श्रोता तत्र विवक्षित इत्यत आह ॥ ईषदिति । मदाधिकारीत्यर्थः ॥ २३ ॥ बुध शब्दार्थमाह ॥ बुध इति । सर्वं जानन्नित्यर्थः । अत एव प्रमाणे सर्वं जानान्निति बुध शब्दार्थं उक्तः ॥ । अभिमान्यपेक्षयैतत् । श्रेयोरोचकत्वप्रकारं दर्शयति ॥ अतरालेति । एवं विधो दुःखासंभिन्नोऽनंतरमग्रस्तोऽभिलाषोपनीतश्चेत्यर्थः । मंदाधिकारिणः प्रति कथं रोचक इत्यतस्तदेव विवृणोति ॥ अनेकेति । अतस्तान्प्रति स्वर्गादिकं विधायांतेऽपि मोक्षं विधाय पश्चान्मोक्षो भवतीत्यर्थः । तथा च तं प्रति मोक्षो विहितुं न शक्यत इति भावः ॥ तप इति । क्लेशरूपत्वादिति भावः । स्वर्गादिषु सुखेष्वंत इति । अयं भावः । मोक्षमार्गस्यातिकठिणत्वादादावेव तत्र प्रवेशायोगाद्वेदस्य मार्गे तान्प्रवेशयितुं ज्योतिष्टोमादिकं कर्तव्यं । तेनांतरालेऽपि मोक्षात्पूर्वमपि स्वर्गादिकं सुखं भवतीति विधाने तस्मिन्विहिते कर्मणि तेषां प्रवृत्तौ पश्चादमृतो वाव सोमपो भवति यावदिंद्र इत्यनित्यत्वज्ञापनेन स्वर्गादीच्छां विनाश्य मोक्षमार्गे प्रवेशयति । यथा भिषगिक्षुदंडदानेनेति । मंदाधिकारिणामित्युक्तं । उत्तमानां तु कथमित्यतः कुसुमस्यानित्यतादिदोषज्ञानाच्चेत्याद्युक्तं विवृणोति ॥ उत्तमाना त्विति । एतादृशं सांसारिकसुखविलक्षणमपि स्वर्गादिकमनित्यत्वाद्दिदोषवदिति कस्मिंश्चिद्वेदविभागे वदेद्यस्मात्तस्माद्वेदो ज्योतिष्टोमेनेत्यादिमोक्षफलकः । अनित्यस्वर्गादिकं विहायानेककल्पसाध्यं मोक्षमेव स्वर्ग शब्देनोक्त्वा मोक्षार्थं ज्योतिष्टोमादि कर्तव्यमिति

विधत्ते । तथा चोत्तमानां स्वर्ग शब्दो मोक्षपरो मंदानां तु प्रसिद्धस्वर्गपर इति भावः । ननूत्तमान्प्रत्यपि स्वर्ग शब्दः प्रसिद्धस्वर्गपर एव कुतो नेति चेत्तत्राह ॥ न हीति । अल्पफले स्वर्गाख्ये । तत्र प्रमाणमुक्तार्थे दर्शयति ॥ मदेति । प्रतीक्षितुं संपादयितुं । कुत इत्यत उक्तं ॥ अधैर्यादिति । एवं तपःकरणे मोक्षे नियमेनास्माक भविष्यत्येवेति धैर्याभावादित्यर्थः । वदेज्ज्योतिष्टोमेनेत्यादिवेदः प्रसिद्धं स्वर्गं स्वर्गपदेन वदेदित्यर्थः । धैर्यात्प्रतीक्षितुं न शक्यत इति वा । उत्तमानां प्रति वेदप्रवृत्तिप्रकारमाह ॥ स्वर्गादिष्विति । ज्योतिष्टोमादिवेदं विमोक्षदं वक्तुं समग्रो वेदराशिः प्रवर्तते । स्वर्ग शब्दो मोक्षपर इति भावेन मोक्षमेव विधत्त इत्याशयः । मंदान्प्रत्याह ॥ इष्विति ॥ एवमिति । स्वर्ग शब्देन प्रसिद्धस्वर्गं प्रतिपाद्य रोचयतीत्यर्थः । उत्तमेषु रोचकत्वं मूले फलश्रुतिरित्यादिनोक्तं तं प्रकारं दर्शयति ॥ मोक्षेति । अंतरालगतोऽपि स्वर्ग एवं विधः किमु साक्षात्फलरूपो मोक्ष इति कैमुत्येनेत्यर्थः । कुत एवमित्यत आह ॥ न हीति । तथा च नृणामाधिकारिणां मध्ये ईषदुत्तमस्य श्रोतुर्विवक्षया तान्प्रति फलश्रुतिः । स्वर्गकाम इति श्रुतिर्नोऽस्माकं सकाशाद्यच्छ्रेयो मोक्षाख्यं तदेव परं केवलं रोचयति । तत्प्रकारस्त्वंतरालगत इत्यादिना तात्पर्ये कथितः । न प्रसिद्धस्वर्गं स्वर्गपदेन प्रतिपादयतीत्यर्थः । तर्हि किमर्थ रोचयतीत्यत उक्तं ॥ यथेति । यथेक्षुदंडं ददामीति भिषक्संबंधिरोचनमेव श्रेयोरोचनं प्रोक्तं गुडजिह्विकान्यायेन मोक्षरुच्युत्पादनायाप्यतरालेऽप्येवं विधं स्वर्गादिकसुखं भवति । किमु मोक्ष इति भावेन स्वर्गपदेन प्रसिद्धं स्वर्गं प्रतिपादयतीति मूलं योज्यं । अथवा । नृणां मध्ये उत्तमश्रोतुर्विवक्षयोत्तमान्प्रतीयं फलश्रुतिर्नोऽस्माकं सकाशाद्यच्छ्रेयो मोक्षाख्य तदेव रोचयति । द्वयोस्तु विशेषः । परं तान्प्रति कैमुत्येन गुडजिह्विकयोत्तमान्प्रति त्वेतादृशसुखोपेतः स्वर्गोऽप्यतितुच्छो मोक्षापेक्षयेति बोधयितुं तान्प्रति फलश्रुतिः स्वर्ग विधत्त इति ध्येयं ॥ २४ ॥ २५ ॥ ननु मंदाधिकारिणां मोक्षे रुच्युत्पादनाय स्वर्गादावांतरालिकं फलं प्रतिपादयंतीय श्रुतिरिति कुतः । तेषां स्वर्गादिकमेव मुख्यफलतया काम्यं किं न स्यादित्यत उच्यते ॥ अपत्येत्यादिना । स्वजनाना भार्यानामनर्थहेतुष्वित्यनर्थहेतुत्वमुक्तं । तदयुक्तं । सभार्याणामेव देवादीनां मोक्षश्रवणनानर्थहेतुत्वायोगादित्यतस्तात्पर्यमाह ॥ अयोग्येति । कामिता कामनावत्ता । तथा च कामेषु विषयेषु प्राणेष्विंद्रियेष्वात्मनोऽनर्थहेतुष्वर्गाग्यपुत्रभार्यादिस्वजनेषु आ सम्यक् सक्त

मनसो वृजिनाध्वनि संसारे भ्राम्यतोऽत एव स्वार्थं मोक्षमविदुषो वृजिनाध्वन्येव न तान्मग्नांस्तमोंऽधतमो विशत एवं स्वार्थोपायमजानन् । बुधस्तेषामुपायं जानन् । वेदस्तेषु स्वर्गादिविषयेष्वेव पुनः कथ युंज्यात् । स्वर्गादि न मुख्यकाम्यतया कथमभिचक्षीतातो मोक्षरुच्युत्पादनयैव वक्तीत्याशयः । न तानि भिन्नपदत्वेऽविदुषस्तांस्तेषु न युंज्यात् । तदेव विवृणोति ॥ कथ युज्यादितीति भिन्नवाक्यतया योज्यं ॥ ॥ २४–२६ ॥ एतं स्वमतं प्रदर्श्यासुरमतं प्रदर्शयितुमेवमित्यादिको ग्रंथः । तत्र व्यवसितमित्यत्र पुरुषेणेत्याद्यन्यथाप्रतीतिनिरासाय व्याचष्टे ॥ एव वेदेति । वेदस्य व्यवसितं । भावे क्तः । दार्ढ्येन निश्चयमविज्ञाय स्थिताः कुबुद्धयोऽत एवावेदज्ञा वेदतात्पर्यमजानानाः फलश्रुतिं कुसुमितां वदंति । अप्रतीतेरिमं पादमनूद्य व्याचष्टे ॥ फलेति । श्रुतिं स्वर्गकाम इति श्रुतिं । कथमस्याः श्रुतेर्मोक्षविषयत्वमित्यतस्तद्योजनाप्रकार प्रमाणेन दर्शयाति ॥ नित्यानदेति । हरेरिति षष्ठ्या अलुक् । हरिभक्तीत्यर्थः । नित्यानंदस्य हरेर्भक्तिज्ञानाद्या इति वा । पुत्रेत्यादिना पुत्रकामः पुत्रकामेष्ट्या यजेतेत्यादिश्रुत्यर्थकथनं । स्वर्ग शब्दोक्तनित्यानंदादिकमुद्दिश्य स्वर्गकामस्य ज्योतिष्टोमेन यजनं ज्योतिष्टोमेनेत्यादि श्रुतिचोदितं नित्यानंदादिकामो यजेतेति । तथा मौक्तपुत्रादिकमुद्दिश्य पुत्रादिकामस्य यजनं पुत्रकाम इत्यादिश्रुतिचोदितमिति योज्यं । अनेनैव वेदव्यवसितमित्यस्य तात्पर्यमुक्तं भवति । अविज्ञाय कुबुद्धय इत्यादेस्तात्पर्यमाह ॥ तदविज्ञायेत्यादिना । भार्यादिकं मौक्तं फलमित्युक्तं । तदयुक्तं । मुक्तौ तत्सद्भावस्याप्रमितत्वादित्यत आह ॥ स्त्रीभिरित्यादिना । ज्ञातयः सहमुक्ताः कल्पांतरे मुक्ता अज्ञातयः । देवानारभ्य ऋष्यंतानां सभार्यपुत्राणामेव मुक्तिसद्भावात्पुत्रादयोऽपि संति मुक्तौ । ज्ञातय एवाप्ताः । तत्र भोगसाधनं द्रव्यमेव वित्तमित्यादि ज्ञेयं । स्वर्गकामश्रुतेर्मोक्षार्थत्वे प्रमाणांतरं चाह ॥ मोक्षाख्यमिति । तस्य फलस्य पुष्पस्वर्गादिवद्वचनं । स्वार्थे वतिः । पुष्पभूतस्वर्गत्वेन वचनं । यद्वा । सादृश्य एव वतिः । पुष्पस्थानीय स्वर्गतुल्यतया वचनं । तत्फलं पुष्पस्थानीयप्रसिद्धस्वर्ग एवेति वचनं । मंदानां मोक्षरोचकमित्यर्थः । प्रमाणांतर चाह ॥ असुराणामिति । अयं स्वर्गकाम इत्यत्यो हरीति । तथा च स्वर्गकामः । सुष्टुरमणज्ञानरूपहरिप्राप्तिकामो यजेतेत्यर्थांतरमुक्तं भवति । देवान्प्रत्येवं कुत इत्यत आह ॥ वेद इति । न हि सर्वप्रमाणोत्तमो वेदोऽल्पफले पर्यवसित इति भावः ॥ २६ ॥ पूर्वोक्त एव मूले विव्रीयते ॥ कामिन इति । कृपणा अत्यागिनो

लोभयुक्ता लुब्धाः पुष्पेषु स्वार्गादिष्वग्निमुग्धा वै धूमतांताः स्वलोक प्रति न जानंतीति श्रुतिं मनसि कृत्वोच्यते ॥ अग्नीति । अग्निरेव मुख्येज्य इति मुग्धा मिथ्याज्ञानिनः । धूमेन यज्ञशालास्थेनातीवतांताः श्रांताः । ननु स्वलोकं न विदंतीत्ययुक्तं । स्वर्गादिलोकस्य ज्ञानस्य सत्वात् । तदुद्देशेन हि क्रियते । अन्यथा तन्न कुर्युरित्यतोऽनूद्य व्याचष्टे ॥ स्वलोकमिति । नन्विदमप्यनुपपन्नं । गृहाद्याश्रयज्ञानस्य सत्वादित्याशंकापरिहाराय न ते मामित्त्युत्तरार्धः प्रवृत्त इत्याशयेनावतारयति ॥ कोऽसाविति । यं न विदंतीति शेषः । हे अंग उद्धव । इदं जगद्यो यदधीनं यतश्चोत्पन्नमेतादृशं जगज्जन्मादिकर्तारं हृदिस्थं स्वसमीप एव हृदये विद्यमानं । न दूरे एतादृशं स्वलोकभूतं मां ते न जानंतीत्यर्थः । नन्वेवं यज्ञादिकं कुर्वतामसुराणां किं फलमित्यतो नीहारेण प्रवृत्ताजल्प्या चासुतृप उक्थशासश्चरंतीति श्रुत्युक्तफलमेवाह ॥ एते उक्थेनेति । उच्चत्वादुक्थनामा प्राण इत्यर्थः । उक्थमुक्थमिति वै प्रजा वदंतीति श्रुतिप्रसिद्धिं प्राणस्योक्थनामेति मंतव्यं । तथा च नीहारेणावृतश्चक्षुषा सम्यक् न जानाति एव सम्यग्धरिमजानाना असुतृपः स्वेंद्रियप्रीणन एव रता एतादृशा ये असुरा एते उक्थशासो मुख्यप्राणेन शास्या भवंतीत्यर्थः । असुराणामुक्थशास्यत्वे प्रमाणमाह ॥ विष्ण्विति । विमोक्षाय विमोक्षं । नन्वेतेऽभक्तास्तमोमार्गे गंतुं योग्या इति च कथं जानाति । येन मोक्षाय प्रापयित्वेति युज्यत इत्येतत्सर्वाभिज्ञतायां प्रमाणमाह ॥ पथ एक इति । एतत्पूर्वार्धेस्तिग्ममेको बिभर्ति हस्त आयुधं शुचिरुग्रो जला भेषज इति । अत्र शुचिः प्राणः । यथोक्तं निरुक्ते । शुचिर्हि प्राण इति ॥ तथा चायमर्थः ॥ यथैकस्तस्करो निधीनां पथो मार्गान्पीपाय जानाति । यथोक्तं निरुक्ते । जानातीति यदाह पीपायेत्येव तदाहेति । एवमेको मुख्य एषः शुचि शब्दोक्तः प्राणः पथो मोक्षमार्गांस्तमोमार्गांश्च वेद जानातीति । तेषां तमःप्राप्तिरपि फलमुच्यतेऽत इति । अत्राविज्ञायेत्येतद्धेतुगर्भमित्याशयेन व्याचष्टे ॥ न इति । आत्मका इत्यस्य व्याख्यानं ॥ स्वरूपा इति । विषयशब्दार्थं वदन्नुक्तं विवृणोति ॥ तदिति ॥ गमनार्थेति । गमनयोग्येत्यर्थः । परोक्ष शब्दस्यांधंतमोवाचित्वे प्रमाणमाह ॥ अधंतम इति ॥ २७ ॥ २८ ॥ तथा चाविज्ञायाहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव चेति मम सर्वयज्ञभोक्तृत्वादिरूपं मम मतमविज्ञाय स्थितास्ते परोक्षविषयात्मकाः । अंधंतमो गमनयोग्यस्वरूपा भवंति । तमः प्राप्नुवंतीति यावदित्यर्थः ॥ २९ ॥ ते मताविज्ञानात्कथं वदंतीत्यतो मन्मताविज्ञाना-

दित्थं वदंतीत्याह ॥ हिंसायामित्यादिना । इदमर्थं व्याचष्टे ॥ तेषामिति । हिंसायां कामः । हिंसां कृत्वा मांसं भक्षयाम इतिच्छेति यावत् । वृथा हिंसा कस्मात्क्रियत इति पृष्टे एतद्धननं यज्ञ एवेति वदंति । वस्तुतो न चोदनाविधिः । विहितयज्ञे वधमकृत्वा स्वेच्छानुसारेण वधो न विहित इत्यर्थः । स्वपदानि वर्णयति ॥ यद्यदिति । प्रापयंति । जनानिति शेषः । जनान्प्रत्युपपादयंतीति यावत् । अत्र प्रमाणमाह ॥ आसुर इति । कुत इत्यत आह ॥ आसुरा इति । यत इति शेषः । पुनः कीदृशा इत्यत उच्यते ॥ हिंसेति । हिंसाविहारास्ते खलाः स्वसुखेच्छयाऽलब्धैर्हिंसितैः पशुभिः । पशुहिंसां कृत्वेति यावत् ॥ ३० ॥ यज्ञैर्दैवतादीन्यजंते । भूतपतीन् रुद्रादीन् । अत्र देवतादीन्यजतां यदाऽसुरत्वमभिप्रेतं तदयुक्तं । विष्णुं यजतां शुद्धसात्त्विकानामपि कामनया देवतादिपूजासद्भावादित्यतस्तात्पर्यमाह ॥ विष्णुमिति । देवादीन्प्राधान्येन पूजयंतीत्यध्याहारेण योज्यं । विष्णुसाम्येन वा ॥ ३० ॥ पुनः कीदृशा इत्यत उच्यते ॥ स्वप्नेति । अनित्यत्वादिना स्वप्नतुल्यं । अमुं लोकं स्वर्लोकं हृदि संकल्प्येत्यन्वयः । आशिषश्चैश्वर्याद्याशिषश्च हृदि संकल्प्य । दृष्टादृष्टफलोद्देशेनेति यावत् । अर्थान्द्रव्यादींस्त्यजंति । द्रव्यादिकं व्ययीकृत्य यज्ञादिकं कुर्वत इत्याशयः । यथाऽऽपणे धान्यादिदृष्टफलं सम्प्राय तदर्थत्वेन वणिक् द्रव्याणि त्यजति ददाति यथा तथेत्यर्थः ॥ ३१ ॥ तेष्वपि विशेषोऽस्तीत्याह ॥ रजःसत्त्वेति । अत्र सत्त्वनिष्ठानामप्यासुरत्वमुच्यतेऽतः कथमेतदित्यतस्तात्पर्यमाह ॥ तामसेष्वेवेति । रजःसत्त्वतमोविशेषरूपाः । प्रभेदा विवक्षिता इति शेषः । एतदेव विवृण्वंस्तेषां फले तारतम्यं प्रमाणेन दर्शयति ॥ तामसेष्विति । ते तामससात्त्विकास्तमोनिष्ठाः । एवं तमोनिष्ठास्तामसेष्वेते प्रसिद्धाः सत्त्वाः सात्त्विकाः । ते एवं निष्ठा एवं तामससात्त्विकव्रतनिष्ठास्ते निरयप्रचुराः । ईषत्स्वर्गयुक्ताश्च स्मृता इति योज्य । तामसराजसास्तामसराजसव्रतनिष्ठाश्चेत्केवलं निरये निष्ठाः । केवल शब्दादीषत्स्वर्गादिसंयुक्तताव्यावृत्तिः । ये तामसतामसास्तामसतामसव्रतनिष्ठाश्चेदंधे तमसि निष्ठा भवंतीति योज्यं ॥ तथा चायमर्थः ॥ तामसा एव त्रिविधाः । तामससात्त्विकास्तामसराजसास्तामसतामसाश्चेति । रजःसत्त्वतमोजुषः । तामसराजसतामससात्त्विकतामसतामसपदार्थसेवनावंतः संतः । रजःसत्त्वतमोनिष्ठास्तामसराजसतामससात्त्विकतामसतामसव्रतनिष्ठास्तामसराजसतामससात्त्विकतामसतामसाः पुरुषास्ते केवलनिरयस्वर्गयुक्तनिरयांधतमःफलका भवंतीति योज्यं । अंते

सर्वेषामप्येषां यद्यप्यंधंतम एव फल। तथाऽप्यनित्यानिरयादिस्तात्कालिकस्तादृशव्रतनिष्ठफलतयोक्त इति मंतव्यं । अत्र मनुष्याधमास्तामससात्त्विकाः। प्रधानदैत्यानुगास्तामसराजसाः। कल्याद्याः प्रधानदैत्यास्तामसतामसा इति विवेको गीतातात्पर्यानुसारेण मंतव्यः ॥ ३२ ॥ तेषामाशासनप्रकारमाह ॥ इष्ट्वेति । इह भूमौ रंस्यामहे रंतुमिच्छामः । तस्यांते दिवि रमणस्य समाप्यंते। इह भूमौ पुनर्महाकुलाः कुलीना महाशालाः। प्रत्यब्दयज्ञकृच्छ्रोत्रियो महाशाल इतीरित इत्युक्तेः । प्रत्यब्दयज्ञकारिणः संतो भूयास्म इत्युपासते आशासत इत्यर्थः ॥ ३३ ॥ अत्र निमित्तमाह ॥ एवमिति । स्वर्गादिपुष्पप्रतिपादनपरत्वेन प्रतीयमानया वेदवाचा विशेषेणाक्षिप्तमनसां । न तु वेदार्थो महात्मसेवया सम्यक् तैर्ज्ञायत इत्यत उक्तं ॥ मानिनामिति । वयमेव सम्यग्वेदार्थज्ञानिनः किमस्माकं महात्माभिः श्रोतव्यमस्तीत्यहंकारवंतो मम वार्ताऽपि प्रसंग एव न रोचते दूरे मद्विचार इत्याशयः ॥ ३४ ॥ ननु पुष्पितया वाचा व्याक्षिप्तमनसामित्ययुक्तं। वेदाना स्वर्गादिप्रतिपादकतया प्रतीयमानानां भगवत्परत्वायोगात् । तथा च फलश्रुतिं कुसुमितामित्युक्तमसादित्यत आह ॥ वेदा इति । अपि यद्यपि वेदा ब्रह्मदेवताकर्मस्वरूपविषयाः प्रतिपादकास्तथाऽपि ब्रह्मात्मविषया एव मुख्यतः प्रतिपत्तव्याः। देवादीनाममुख्यवाच्यत्वादित्यर्थः। अत्र ब्रह्मात्म शब्दमन्यथाप्रतीतिपरिहाराय प्रमाणेनैव व्याचष्टे ॥ ब्रह्मत्वमिति । तत्पूर्णत्वं । स्वतोऽनुपचारेण। तथा च ब्रह्मात्मविषयाः पूर्णत्वोपेतहरिस्वरूपप्रतिपादका इत्यर्थ उक्तो भवति। ननु वेदानां मुख्यतो ब्रह्मात्मपरत्वे सर्वेषां तत्प्रतीत्यभावः कुत इत्यत आह ॥ परोक्ष इति गूढार्थवादीत्यर्थः। अतो न ब्रह्मात्मविषयत्वं प्रतीयते सर्वेषामित्याशयः। परोक्षतयाऽत्र प्रतिपादनेन किं कृतमित्यत आह ॥ परोक्षामिति। गूढार्थप्रतिपादनं मम प्रियं यतोऽतः परोक्षवाद इत्यर्थः। च शब्दाद्देवानां प्रियं। परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विष इति श्रुतेः ॥ ३५ ॥ आदौ समग्रवेदस्वरूपमेव सर्वेज्ञातु न शक्यतेऽपरिच्छिन्नत्वात्किमुतानंतवेदवाच्योऽतिपरिपूर्णो भगवानित्याशयेनाह ॥ शब्दब्रह्मेति। वेदराशिः। तर्हि निरधिकारिकत्वाध्ध्येयतापत्तिरित्यत उक्तं ॥ प्राणेति। कथमनेनोक्तशंकापरिहारः कथं च वेदस्य प्रामाण्याद्यात्मकत्वमित्यतो व्याचष्टे ॥ प्राणेति। मुख्यप्राणादिदेवैरित्यर्थः। मीयते ज्ञायते। तत्र प्रमाणमाह ॥ मेयत्वादिति। ज्ञेयत्वादित्यर्थः। वेदेऽनंतपारत्वं घटयति ॥ अन इति। ताभ्यां विनाशपरिमिताभ्यां ॥ ३६ ॥ स वेद

उभयोरप्येकार्थकत्वाद्वैय्यर्थ्यमाशंक्य तत्परिहारायानूद्यार्थमाह ॥ भूम्नेति । नन्वेतादृशवेदवाच्येन परिपूर्णेन भवितव्यं । तादृशवाच्याभावान्निरर्थकत्वापत्तिरित्यत उक्तं ॥ मयोपबृंहितमिति । प्रतिपाद्येन युक्तमित्यर्थः । समुद्रवदनंतपारं । गंभीर गभीरार्थकमज्ञेयार्थकं दुर्विगाह्यं विशेषेण गाहनं कर्तुं । व्याख्यातुमिति यावत् । अशक्यमित्यर्थः । अत्र समुद्रवेदयोः शब्दसाम्यं द्रष्टव्यं । तथा च प्रतिपाद्यस्य ममानंतत्वात्प्रतिपादकं शब्दब्रह्म सर्वेषां सुदुर्बोऽधं प्राणादिदेवैरेव सुबोधमिति भावः । ननु कथं वेदस्यापारशब्दोक्तपरिमित्यभावः । सर्वैरप्यध्यापकैः पठ्यमानस्याष्टाष्टकोपेततया परिमितेरेव दर्शनात्तावत्वमेव वक्तव्यमिति चेत् । सत्यं । सर्वैरप्यध्यापकैः पठ्यमानो वेदैकदेश एव पठ्यते न सर्वोऽपि । तथा चानंतत्वमेव मंतव्यमित्याशयवानाह ॥ भूतेष्विति । यथा बिसेषु पद्मनालेषूर्णा तत्वायितातिसूक्ष्मा प्रदृश्यते । एवं भूतेष्वध्यापकजनेषु घोषरूपेण तत्तद्ध्वन्याभिव्यक्तवर्णरूपेण स्वल्प एव वेदो लक्ष्यते प्राणिभिर्ज्ञायते तावता तावत्वमेव न मंतव्यमित्याशयः । प्राणेंद्रियमनोमयामित्युक्तं । तत्र प्राणेन मेयत्वप्रकार स्पष्टयति ॥ यथेति । ऊर्णनाभिर्हृदयाद्धृदयमारभ्योर्णामुद्धृत्य मुखादुद्वहते निष्कासयति । तथैवं कोष्ठो वायुस्तत्तत्स्थान्याभिहत्येत्यादिक्रमेण हृदयाकाशादुत्पन्नघोषवान्ध्वनिमान् ॥ ३६—३८ ॥ छंदोमयोऽमृतमयोऽतिरोहितविज्ञानाद्वायुरप्यमृतः स्मृत इति प्रमाणात् । प्रलयेप्यतिरोहितज्ञानस्वरूपस्तत्प्रधानो विष्णुर्हि दाता मोक्षस्य वायुश्च तदनुज्ञयेत्युक्तेः । प्राणिनां मोक्षप्रदानाय तज्ज्ञाता वा । प्रभुः समर्थः प्राणः सहस्रपदवीमनंतशाखोपेतां ॐकारेप्वंजितां स्पर्शस्वरोष्मांतस्थभूषितां । कादयो मावसानाः स्पर्शाः । स्वराः अ आ इ ई इत्याद्याः अं अः इत्यंताः । अचः । श ष स हाः ऊष्माणः । य र ल वांतस्थाः । एतैर्वर्णैर्भूषितां । एतदात्मकामिति यावत् ॥ ३९ ॥ विचित्रभाषां विततां चतुरुत्तरैश्छंदोभिर्विततां । पूर्वछंदापेक्षयोत्तरछंदांसि चतुरक्षराण्येवोत्तराणि येषां तानि तैश्चतुरक्षरैश्छंदोभिर्विततां । अनंतपारां विनाशपरिमितिशून्यां । बृहतीं देशतः कालतश्च व्याप्तां श्रुतिं । आस्पर्शरूपिणा मनसा मनःपूर्वं तद्धितबुद्ध्या रुद्रादिदेवेभ्यः सृजत्युपादिशति सृष्टिकाले पुनः कल्पांते स्वस्मिन्नेवाक्षिपते निदधातीत्यर्थः । छंदोभिरित्युक्तं कानि तानि छंदांसीत्यत उक्तं ॥ गायत्रीति श्लोकेन । तत्र मनसा स्पर्शरूपिणेति मनसः स्पर्शरूपवत्त्वं प्रतीयते तद्विरुद्धमतः पदच्छेदं दर्शयन्व्याचष्टे ॥ आस्पर्शेति । प्रकाशयति । ध्यायतीति यावत् । करणे कर्तृत्वोपचारः । विष्णोः कथमास्पर्श-

शब्दवाच्यत्वमित्यतस्तान्निर्वक्ति ॥ आस्पर्श इति । स्पर्शभोगा आ समंतादस्यैव संतीत्यास्पर्शो विष्णुरित्यर्थः । तत्र प्रमाणमप्याह ॥ भुक्त इति । एकलं प्राण मुख्यप्राणं । प्राणस्यैवेत्यादिनाऽऽस्पर्शरूपिणेत्येतदुक्ततात्पर्यकं । कथं प्राणस्य छंदःस्वरूपत्वमनुपपन्नमेव छंदोमय इत्यनेनोच्यत इत्यतः प्रमाणेनैव तत्पदं व्याख्याति ॥ मीयत इति । ज्ञायंत इत्यर्थः । तथा च छंदोमयः छंदो ज्ञातेत्यर्थ उक्तो भवति । ॐकारेष्वंजितामिति कथमुच्यते । ॐकारेष्वेकत्वेनोंकारेष्विति बहुवचनायोगादित्यतः ॐकाराणां बहुत्वाद्युक्तं तत्र बहुवचनमित्याशयेन प्रणवबाहुल्यं प्रमाणेनैवोपपादयति ॥ त्रिमात्रमिति । अत्र मात्रा शब्देनाकारः प्रथमा मात्रा उकारो द्वितीया मात्रा मकारस्तृतीया मात्रेति मांडूकोपनिषदुक्तरीत्यांऽशा ग्राह्याः । न तु ह्रस्वदीर्घप्लुताः । तथा चाकारोकारमकाररूप-मात्रात्रयं मात्रात्रयोपेतोऽयं तावदेकः प्रणवस्तमादितः कृत्वा तमारम्य यावच्चानंतमात्रका अनंतमात्रकं यावत् । अनंतमात्रात्मकः ॐकारपर्यंतं मध्ये विद्यमानस्ते सर्वेऽपि प्रणवा इत्यर्थः । मध्यस्थाः प्रणवाः कीदृशा इत्यत आह ॥ एक मात्रेति । त्रिमात्रकप्रथम ॐकारापेक्षया द्वितीयादि ॐकारा एकैकवर्णोत्तरा इत्यर्थः । तथा च प्रथम ॐकारस्त्रिमात्रकः । द्वितीयस्तदपेक्षयैकमात्रोत्तरः । कोऽर्थश्चतुर्वर्णकः । तृतीयोंकारस्तदपेक्षया पंचवर्णकस्तदपेक्षया चतुर्थकः षण्मातृकः । एवमुत्तरत्र गत्वांऽत्योऽनंतमात्रक इति भावः । यावत्योऽनंतमात्राः संति ते सर्वेऽपि प्रत्येक प्रत्येक प्रणवास्तथाऽनंताः प्रणवाः प्रकीर्तिताः । कुतः । विभेदेन प्रणवेऽ-वांतरभेदानां सत्वादिति भावः । अत एव त्रिमात्रमादितः कृत्वेति प्रमाणमेव मल्लीकृत्य नारायणपंडिताचार्यैर्मध्वविजये चतुर्थ-सर्गे । अनंतमात्रां तमुदाहरंति य त्रिमात्रपूर्वं प्रणवोच्चयं बुधा इत्युक्तं । प्रणवोच्चयमिति प्रणवबाहुल्यमुक्तं । अनंतमात्राभिरनंत-वर्णात्मकैर्वेदैरतो निर्णयो यस्योंकारस्य तदनंतमात्रमिति व्याख्यानं तु यावच्चानंतमात्रका इति प्रमाणानालोचनकृतमित्यवसेयं । ननु त्रिमात्रस्योंकारत्वं युक्तं । ॐकारो हि भगवद्वाचकतया प्रसिद्धः । वर्णत्रयात्मकोंकारस्य च भगवद्वाचकत्वं प्रसिद्धं तदितरा णामनंतमात्रांतानां प्रणवानां भगवत्प्रतिपादकत्वाभावात्कथमेतदित्यत आह ॥ एकमात्रोत्तरा इति । अत्रैक शब्दः प्रथमवाची । प्रथममात्राऽऽदिमात्राऽऽदित्वेनकृतवर्णत्रयात्मकोंकारस्त्यर्थः । तदपेक्षया ये उत्तराः प्रणवा अनतमात्रांतास्ते सर्वेऽपि वासुदेवप्रति-पादका इत्यर्थः । एव प्रणवानामनंतत्वं कस्माद्वान्यमित्यत आह ॥ तेषामिति । अनंतप्रणवानामित्यर्थः । सर्वेऽनंता वेदास्तावदनंता

इति । अनंता वै वेदा इति प्रमाणसिद्धं । तेषामोंकारव्याख्यानरूपत्वं च प्रसिद्धं । तत्रानंतवेदव्याख्येयोंकारस्यैकत्वेऽनंतवेदानामेकोंकारव्याख्यानरूपत्वायोगादोंकाराणामप्यनंतत्वमवश्यं वाच्यमेवेत्याशयः । तस्मादनंतवेदव्याख्येयोंकाराणामप्यनंतत्वात् । ॐकारेष्वजितामित्यस्य तात्पर्यं ॥ ओंकारेणान्विता । इति । तथा चोंकारेष्वंजितां तद्व्याख्यानरूपतया संबद्धामित्यर्थ उक्तो भवति । विचित्रभाषावितताामित्युच्यते । कास्ता विचित्रभाषा याभिरियं विततेत्यतस्ताः प्रमाणेनैव दर्शयति ॥ गुह्येत्यादिना । त्रैविध्यमेव दर्शयति ॥ गुह्येति ॥ एवमादीति । आदि पदेन गुह्यसमाधिभाषा ग्राह्या । तथा दर्शनगुह्यभाषा दर्शनदर्शनभाषा दर्शनसमाधिभाषा तथा समाधिगुह्यभाषा समाधिसमाधिभाषा समाधिदर्शनभाषेत्यादिक्रमेणेत्यर्थः । एवं सति नवभाषाः संपन्नाः । पुनरित्युक्तत्वात् । नवभाषाणामपि पुनः प्रत्येक प्रत्येकं त्रैविध्ये सप्तविंशतिभाषाः संपन्नाः । एकैका च त्रिधा पुनरिति वचनेन सप्तविंशतिभाषायामपि पुनः प्रत्येकं प्रत्येकं त्रैविध्ये तिस्रः सप्तविंशत्यो जाताः । तेनैकाधिकाशीति संख्यासंपन्नेत्येवमेवैकाशीतिविभेदिता विभेदयुक्ता इत्यर्थः । प्रसिद्धार्थे प्रतीयमानार्थे गुह्यार्थे तत्परा तात्पर्योपेता । तामुदाहरति ॥ अध इति । अंधस्य मणिप्राप्त्यरूपप्रतीतार्थेऽन्वये योग्यताया अभावाद्भगवदज्ञानेनांधो गुरूपदेशादिना मणिं मणिमुखप्रधानं चोत्तमस्य वचो भवेदित्यभिधानात् । ज्ञानेनोत्तमं भगवज्ज्ञानं लब्धवानिति गौप्यार्थपरेत्यर्थः । दर्शनभाषां लक्षयति ॥ दर्शनानीति । या भाषा पशुपत्यादीनां दर्शनानि पाशुपतशास्त्रादीन्यवलंब्य बहुश्रुतिविरुद्धं वदेत् । ननु बहुश्रुतिविरोधमात्रेण कथं दर्शनात्मकत्वं वेदानुसारिष्वपि तथात्वदर्शनात् । वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पनेत्युक्तेरित्यतो विशेषणांतरमाह ॥ अत इति । या चांते निषेधसंयुक्ता सा भाषा दर्शनात्मिका । तामुदाहरति ॥ भस्मेति । समाधिभाषां लक्षयित्वोदाहराति ॥ यथेति । या भाषा यथा प्रतीयमानार्था सा विद्वाद्भिः समाधिरिति प्रकीर्तिता । सा च विष्णुः परमेत्याद्येरितेति योज्यं । समाधिभाषयोक्तं यत्तत्सर्वं ग्राह्यमेव हि । विष्णोः परमत्वप्रतिपादकं भागवतं समाधिभाषया प्रवृत्तामिति मतव्य । समाधिनाऽनुस्मरत तद्विचेष्टितमित्युक्तेः । ननु भस्मस्नानविधानस्य श्रुत्युक्तत्वान्नृसिंहपुराणोक्तत्वाच्च कथं तस्य निषेधसंयुक्तत्वेनाग्राह्यत्वमभिप्रेतमित्यत आह ॥ भस्मेति । श्रुत्युक्तं तु श्रुत्युक्तमपि भस्मस्नानविधान दर्शनानुगं दर्शनभाषानुसारेणोक्तं । दर्शनभाषयोक्तमिति यावत् । अतोऽग्राह्यं भस्मस्नानमित्यर्थः । तथा नृसिंहगं तु विधानं तामस-

नृसिंहपुराणोक्तमपि भस्मस्नानविधानमग्राह्यमेव तस्याप्रमाणत्वादित्यर्थ इति योज्यं । छंदोभिश्चतुरुत्तरैरित्युक्तं । तत्कथं चतुरुत्तरत्वमित्यतस्तदुपपादयति ।। गायत्र्या इति । चतुर्विंशत्यक्षराया इत्यर्थः ।। इत्यादीति । उष्णिहोऽनुष्टुप् चतुर्वर्णाधिकेत्यादिक्रमेणेत्यर्थः । नन्वेवं तर्हि जगत्यपेक्षयाऽतिछंदसश्चतुर्वर्णोत्तरत्वं तदपेक्षयाऽत्यष्टेस्तदपेक्षया जगत्या इति प्राप्नोतीत्यतो नेत्याह ।। जगत्यंतानामेवेति । न तदुत्तराणामपीत्येवकारार्थः । तथा चैवं जगतीपर्यंतं चतुर्वर्णाधिक्ये जगत्या अष्टचत्वारिंशद्वर्णत्वं संपद्यते । तथा च द्वादशाक्षरा जगतीति श्रुतिरनुकूला भवति । द्वादशाक्षरा द्वादशाक्षरोपेतपादचतुष्टयवतीत्यर्थः । कुतो जगत्यंतानामेव चतुरुत्तरत्वनियमो न तदुत्तराणामतिछंदादीनामित्यतो बाधादित्याह ।। छदस्त्विति । अयं भावः । जगत्युत्तराणामपि चतुरुत्तरत्व नियमे त्रिकद्रुकेष्वित्याद्यतिछंदसा द्विपंचाशदक्षरत्वप्राप्त्याऽष्टाक्षराष्टपादा अतिछंदस इति चतुःषष्ट्यक्षरोपेततापसिद्धिबाधः । तथा च जगतीछंदसश्चतुःषष्ट्यक्षरोपेतत्वप्राप्त्या छंदस्तु नवपादमिति अष्टाक्षरोपेतनवपादत्वकथनेन द्वासप्तत्यक्षरोपेततापसिद्धिबाधः स्यादतो जगत्यंतानामेव चतुरुत्तरत्वनियमो न तदुत्तराणां बाधादिति ।। ४१ ।। एतादृशानंतवेदरहस्यमहमेकमेव साकल्येन जानामीति भावेनाह ।। किमित्यादिना । वेदः किं विधत्ते किं व्याचष्टे किमनूद्य विकल्पयेत् विविधरूपत्वेन कल्पयेत् । उपलक्षणमेतत् । किमपोहेदित्यपि ग्राह्यं । इत्येवं प्रकारेणास्याः श्रुतेर्हृदयमभिप्रायं लोके मदन्यः कश्चन न वदेदित्यर्थः । ननु संध्यामुपासीतेत्यादिकर्मविधिवाक्ये स्पष्ट विधिलक्षणार्थप्रतीतेरेतदर्थातिरिक्तमर्थ भगवान्कथ वेत्तीत्यत आह ।। मामिति । किं विधत्त इत्यादेरुत्तरं ।। मा विधत्त इत्यादि । विकल्प इत्युक्तं । तत्र को विकल्प शब्दार्थ इत्यत आह ।। विविधेति । विविधरूपत्वेन कल्पनं । कुत्र क्रियत इत्यत आह ।। चत्वारीति । ननु तत्र चत्वारीत्यनूद्य वाक्त्वं विधीयते तत्र विविधरूपत्वेन कल्पन कथं प्राप्नोतीत्यत आह ।। तत्रेति । चत्वारीति श्रुतावित्यर्थः । तथा चान्यत इति वाक् भगवांश्चत्वारि चतुरूपयुक्त इति वागित्यनूद्य विविधरूपत्वेन कल्पनमेव विधीयत इत्यर्थः । तत्र प्रमाणमाह ।। विधीति । पूजैवोन्यत इत्यन्वयः । अभिधाने इंद्रचंद्रादिदेवताप्रतिपादनपरे भागे । तस्य हरेर्बहुत्वं बहुरूपत्वमपोहे न सुरां पिबेदिति निषेधप्रतिपादनपरे भागे तद्गुणा हरिगुणा उच्यंते । तस्य हरेः । इत्यस्याहृदयामित्यादेस्तात्पर्यं ।। तत्रेति । एवं

समस्तवेदतात्पर्यमित्यर्थः ॥ तथा चायमर्थः ॥ किं विधत्त इत्यस्योत्तरं ॥ मां विधत्त इति । कर्माद्यभिधात्री श्रुतिर्मां प्रत्येव मत्पूजार्थमेव विधत्ते । किमाचष्ट इत्यस्योत्तरं ॥ अभिधत्ते मामिति । इंद्रचंद्राद्यभिधात्री श्रुतिर्मामेव मद्गुणानेवाभिधत्ते । किमनूद्य विकल्पयेत् किमपोहेदित्यनयोरुत्तरं ॥ विकल्पापोह्य इत्यहमिति । विकल्पश्चत्वारि वागित्यादौ विविधरूपत्वेन कल्पनाविषयोऽहमेवेत्यर्थः । न सुरां पिबेदिति वाक्यादहमेवापोह्यो निराकार्यः । मत्प्रीतिसाधनत्वादित्यर्थः । विकल्पश्चासावपोह्यश्च विकल्पापोह्य इति विग्रहः । इत्येवमस्याः श्रुतेर्हृदयं नान्यो मद्वेद कश्चन किं त्वहमेव जानामीति श्लोकार्थः । ननु न सुरां पिबेदित्याद्यपोह्यवाक्येषु मत्प्रीतिसाधनत्वादहमेवापोह्य इत्युक्तं । तदयुक्तं । व्यवाययज्ञे मद्यं तु सोमात्मकतयेष्यत इति प्रमाणेन तत्पानस्य विहितत्वेन हरिप्रियत्वात् । तथा ब्राह्मणो न हंतव्य इत्यपोहोऽयुक्तः । वृत्रासुरवधस्य हरिप्रीतिसाधनत्वात् । तस्मात्कथमेतदित्यतो न सुरां पिबेत् ब्राह्मणो न हंतव्य इति निषेधवाक्ये निषिद्धमानं भगवदप्रियं प्रमाणविशेषेणैव दर्शयति ॥ सुरा इति । सुष्टुरमणरूपत्वादित्यर्थः । पिबेदित्यत्रत्यपानशब्दतात्पर्यकथनं ॥ ते म इति । निषेधवाक्यार्थमाह ॥ तादिति । चिंतनमित्यर्थः । तथा च न सुरां पिबेत् । भगवद्गुणा मे स्युरिति न चिंतयेत् । तदप्रीतिसाधनत्वादित्यर्थ उक्तो भवति । हत्या शब्दतात्पर्यकथनं ॥ स नेति । निषेधवाक्यार्थमाह ॥ ता नेति । तथा च ब्राह्मणो न हंतव्य इत्यस्य विष्णुर्नास्तीति न चिंतितव्यस्तदप्रीतिसाधनत्वादित्यर्थ उक्तो भवति । नान्यो मद्वेद कश्चनेत्यत्र मदन्यः कश्चन न वेद किंतु सर्वोऽपि जनो जानातीत्यन्यथाप्रतीतेरन्वयं दर्शयन्कश्चनेति पदं व्याख्याति ॥ मदन्य इति । चनेत्यव्ययस्यार्थः । अपीति ॥ ४२ ॥ ४३ ॥ न केवलमेवं कतिपयवाक्यार्थः किं नाम सर्ववेदार्थोऽप्येतावानेवेत्याह ॥ एतावानिति । नन्वेतादृशो वेदः कदा विश्राम्यति विधानादिरूपं स्वव्यापारं विहाय केवलभगवत्स्वरूपपरं कदा भवतीति शंकायां तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तत इत्युक्तेर्जीवानां मोक्षं परब्रह्मस्वरूपं प्रतिपादनेन संपादयित्वा प्रशाम्यति । मुक्तान्प्रति स्वव्यापारशून्या भवतीत्याशयेनाह ॥ शब्द इति । अत्रान्यथाप्रतीतिपरिहाराय भिदामित्येतन्मामित्यस्य विशेषणं । न च स्त्रीलिंगत्वादनुपपत्तिः । तत्त्वानंगीकारात् । सोमपान शब्दवदकारांतः पुलिंगोऽय शब्द इत्याशयेन विग्रहं दर्शयन्नन्वयं दर्शयति ॥ अभिदश्चेति ॥ अश्चेति । अकारवाच्यश्चेत्यर्थः । तथा सवर्णदीर्घे अभिदामिति भवति ।

आस्थाय विषयतयेत्यर्थः । प्रतिपाद्येति यावत् । मायामात्रमनूद्येत्यादेः स्पष्टं मायावाद्यनुकूलत्वात्तत्परिहाराय व्याचष्टे ॥ मायेति । अनुवादस्य किं कृत्यमित्यत उक्तं ॥ उपासनेति । भगवदिच्छया स्थूलशरीरेऽधिकारिणः प्राप्ते सति तं प्रति निदिध्यासितव्य इत्यादिविधिः संभवति । सूक्ष्मदेहिनं प्रत्युपासनादिविधानायोगादित्याशयः । अंते प्रतिषिध्येत्यस्यार्थमाह ॥ मोक्षेति । यद्देहावशिष्टस्योपासनादिकं विहितं तादृशदेहत्याग एव मोक्षो मोक्षे सति देहादिकं निवर्तत इति प्रतिषिध्य मोक्षरूपेण देहादेर्निवृत्तिं ज्ञापयित्वा प्रशाम्यति । मोक्षे प्रलये च मुक्तान्प्रति निर्व्यापारा भवतीत्यर्थः । उक्तार्थे प्रमाणमाह ॥ सर्वेति । अ इत्यस्य व्याख्यानं ॥ अदोषत इति । तस्य विष्णोरुपासने उपासनार्थं बंधं चोक्त्वेत्यन्वयः । ननु मुक्तानामपि विष्णूपास्तेः सद्भावादुपासनस्य स्थूलदेहं विनाऽयोगान्मोक्षेऽप्युपासनार्थं मुक्तान्प्रति वेदविधिः प्रवर्तत एवेत्याशंकापरिहारायोक्तं ॥ स्वभावेति । स्वरूपदेहेनैवोपासनाकर्तृत्वस्वरूपवत्त्वात् । तथा च न बाह्यस्थूलदेहापेक्षयेति भावः । प्रशांत्यवस्थायां तर्हि वेदस्य निर्विषयत्वापत्तिरित्यत उक्तं ॥ वासुदेवेति । केवलभगवत्प्रतिपादक इत्यर्थः ॥ तथा चायमर्थः ॥ शब्दो वेदोऽधिकारिजीवान्प्रति अभिद । सर्वावतारेष्वभिन्नं निर्दोषं च मां विषयत्वेनास्थाय प्रतिपाद्यैतादृशस्य ममोपासनाविधानार्थं मायामात्रं भगवदिच्छानिर्मितं स्थूलदेहादिकमनूद्यांते उपासनादिद्वारा भगवदपरोक्षज्ञानोत्पत्त्यनंतरं प्रतिषिध्य देहत्याग एव मोक्ष इत्येव देहादेर्निवृत्तिं ज्ञापयित्वा मुक्तान्प्रति स्वय प्रशाम्यति । विधानादिरूप स्वव्यापार न करोति । केवलहरिप्रतिपादकतयैव तिष्ठत इति । शब्द आस्थाय माभिदामित्येतावत एवांशस्य प्रकारांतरेण योजनां दर्शयति ॥ अभिदामिति । अभेदमित्यर्थः । आस्थाय । तत्प्रतिपादकतयेति यावत् ॥ मेतीति । अमानो नाः प्रतिषेध इति प्रतिषेधाद्यर्थकोऽय मा शब्दः । नास्तीत्यर्थः ॥ तथा चायमर्थः ॥ नन्वेतावान्सर्ववेदार्थ इति सर्वोत्तमो हरिरेव सर्ववेदार्थ इत्युक्त । तदयुक्तं । तत्त्वमसीत्यादावभेदस्यैवोक्तेरित्याशकायामुच्यते ॥ शब्द इति । जीवेश्वरयोरभिधामभेदमास्थाय तत्प्रतिपादकतया विद्यमानः कोऽपि शब्दो मा नास्तीत्यर्थः ॥ तथा चोक्त युक्तमित्याशयः । मायामात्रमित्यादेस्तूक्तैव योजनेति ॥ ४४ ॥ इति श्रीभागवतटिप्पण्यामेकविंशोऽध्यायः ॥ ११—२१ ॥ ॥

॥ हरिः ॐ ॥ अत्र तत्त्वानां संख्यानं जीवपरभेद निरूपयत्यस्मिन्नध्याये । तत्रादावुद्धवः पृच्छति ॥ कतीत्यादिना ।

नन्नु प्रश्नस्य संदेहमूलकत्वात्कः संशय इत्यतः संशयमूलां विप्रतिपत्तिं दर्शयति ॥ नवेत्यादिना । नवैकादशपंचत्रीन् भावान् भूतेषु येन वै । ईक्षितान्वेकमप्येषु तज्ज्ञानं मम निश्चितमिति । एकोनविंशाध्याये । त्वमात्थ वयं च शुश्रुम इत्यर्थः । संख्यानमेतावत्त्व यद्विवक्षया किं विवक्षया ॥ १–४ ॥ ब्राह्मणा वेदविचारकुशला यथा भाषंते तथा सर्वत्र पक्षेषु युक्तयः संतीत्यर्थः । अत्र मायां मदीयामित्यन्यथाप्रतीतिनिरासायानूद्य व्याचष्टे ॥ माया मदीयामिति । मायामित्यादि श्लोकार्थे प्रमाणमाह ॥ विष्णोरिति । भगवदुक्तिसामर्थ्यमाश्रित्य । अनेन मायामयमित्यर्धस्य तात्पर्यमुक्तं । तादित्यारभ्य शक्तिरित्यंतेनैवमित्यर्धस्य । यासामित्यर्धस्य तात्पर्यं ॥ यस्या इति । यस्या शक्तेर्जातादव्यक्तादेर्विकारतो मनसो विकल्प इत्यन्वयः । कोऽयं विकल्प इत्यत आह ॥ प्राप्त इति । प्राप्त इति पादस्य तात्पर्यं । तच्चेति । शम शब्दार्थ उक्तः ॥ वासुदेवैकनिष्ठयेति । निरहंकारायेति दम शब्दतात्पर्यं । इंद्रियैरहं करोति कर्तृत्वाभिमानत्यागस्यैवेंद्रियनिग्रहार्थकदम शब्दफलितार्थत्वादित्याहुः । विकल्प इति पादस्य तात्पर्यं ॥ विवादेति । न तु विरुद्धकल्पनं । यासामित्यर्धं विवृतमपि स्ववाक्येन विवृणोति ॥ यासामिति । शक्तीनामित्यर्थः । सकाशात् । जातादिति शेषः । अव्यक्तादिव्यतिकरादव्यक्तादेर्विकारादित्यर्थः । यथा वक्तुर्विवक्षितमित्यत्रापेक्षितं पूरयति ॥ तत्त्वसख्येति ॥ तथा चायमर्थः ॥ ननु स्वकपोलकल्पितत्वेन वदतां मतं कथं प्रमाणं स्यादित्यत उच्यते ॥ मायामिति । मदीयां मायां मत्सामर्थ्यमुद्गृह्यालंब्य नानाविधतत्त्वसंख्यां कुर्वतां ऋषीणां किं नु दुर्घटं किमनुपपन्नमस्ति सर्वं प्रामाणिकमेवेत्यर्थः । नवैकादशेति मदुक्त्या मदुक्ततत्त्वसंख्यानं ज्ञात्वा तदविरोधेनैव कयाचिद्विवक्षया तत्त्वसंख्यां मुनीश्वराश्चक्रुरिति मन्मताविरोधित्वात्सर्वमपि मतं प्रामाणिकमेवेत्याशयः ॥ ५ ॥ यथा त्वमात्थ तदेव न भवति । परस्परविरोधाभिप्रायेण त्वया क्रियमाणः प्रश्नोऽयुक्त इत्यर्थः । अहं यद्वच्मि तत्तथा । वक्ष्यमाणरीत्याऽविरोधमहं यथा वच्मि तथा ज्ञातव्यमित्यर्थः । नन्वेवमप्यविरोधे तत्तदृषिशिष्या मद्गुरूक्तमेव तत्त्वं न त्वद्गुरूक्तमिति कस्माद्विवदंत इत्यत आह ॥ एवमिति । षड्विंशत्यादिभेदेन विवादं कुर्वतां तेषां विवादे दुरत्यया मे शक्तय एव हेतुर्हेतुभूताः । कीदृशास्ता यासां शक्तीनां सकाशाज्जातादव्यक्तादेर्व्यतिकराद्विकारान्मनसो विकल्पो विरुद्धकल्पनमासीत्तदेव वदतां विवादमानानां पदमाश्रय आसीत् । मन्मताविरोधेनैतैरुक्तमिति न जानंति । मन्माया-

मोहितधीत्वादतो मनसो विकल्पेनात्र भ्रमाद्विवदंतीत्याशयः । कदा नु विकल्पोपशम इत्यत आह ॥ प्राप्त इति । इंद्रियनिग्रहलक्षणे दमसहिते भगवन्निष्ठालक्षणशम इति बुद्ध्या विवेकेन योज्यं । प्राप्ते सति विकल्पोऽव्येति नश्यति । एवं विकल्पनाशे सति मुनिविकल्पनाशमनुवादो विवादः शाम्यतीत्यर्थः । सम्यग्घरावंतःकरणं निधायाहंकारं त्यक्त्वा सम्यग्विचारे क्रियमाणे सति भगवन्मताविरोधज्ञानमेव तेषां भवतीति विकल्पमूलकविवादोपशमो युक्त इत्याशयः ॥ ६ ॥ ७ ॥ एवं तत्त्वानामनेकधा संख्याने युक्तिमाह ॥ परस्परेति । कार्याणां कारणे कारणानां च कार्ये प्रवेशादित्यर्थः । पौर्वापर्यप्रसंख्यानं पूर्वसंख्याऽल्पाऽपरा बह्वी तत्संबंधित्वं पौर्वापर्यं न्यूनाधिकभावेन । प्रसंख्यानमिति यावत् । वक्तुर्यथा विवक्षितं तथा विवक्षाभेदेन तत्त्वसंख्या बहुधा भवतीति न विरोध इत्याशयः ॥ ८ ॥ एतदेव विवृणोति ॥ एकस्मिन्निति । पूर्वस्मिन्पूर्वभाविनि कारण इत्यर्थः । तथा चैकस्मिन्नपि पूर्वस्मिन्कारणभूते तत्त्वे इतराणि सर्वशस्तत्त्वानि प्रविष्टानि दृश्यंते । तथाऽपरस्मिन्पश्चाद्भाविनि कार्यभूते तत्त्वे इतराणि कारणभूतानि तत्त्वानि प्रविष्टानि दृश्यंते । व्याप्तं कार्येषु कारणमित्युक्तेः । यस्मादतस्तस्मादमीषां तत्त्वानां प्रसंख्यानं गणनं कर्तुमिच्छतामृषीणां पौर्वापर्यं न्यूनाधिकभावेन प्रसंख्यानं युज्यत इत्यर्थः । तन्मम संमतं युक्तियुक्तत्वादित्याह ॥ यथेति । यदि उक्तमिति पदच्छेदः । यद्युक्तमिति पदकरणे युक्तीत्यनेन पुनरुक्तिः । तथा च ऋषिभिर्यदि यद्यथा विविक्तं स्पष्टमुक्तं तत्तथा वयं गृह्णीमः । कुतः । युक्तीनां संभवात् । अत्रार्थे युक्तीनां सद्भावादित्यर्थः ॥ १० ॥ एवमनेकधा तत्त्वसंख्यानं कुर्वद्भिरपि ऋषिभिः सर्वैः स्वतंत्रतत्त्वभूतो भगवानंगीक्रियते इत्यतस्तदनंगीकारे बाधकप्रदर्शनमुखेनोपपादयति ॥ अनादीति । एतत् श्लोकतात्पर्यमाह ॥ सर्वथेति । कुत इत्यत आह ॥ जीवस्येति । स्वत ईश्वरानुग्रहमंतरेण स्वशक्त्येत्यर्थः । अन्यथाऽनादिकाले संबधायोगादित्याशयः । तथा चानादिकाले भगवदज्ञानयुक्तस्य जीवस्यात्मसाक्षात्कार ईश्वरानुग्रहमंतरेण स्वशक्त्या यस्मात्तन्न संभवत्तस्माज्जीवोऽन्यो जीवस्य ज्ञानप्रद ईश्वरः सर्वथांऽगीकार्यः । अज्ञानां ज्ञानदो विष्णुरित्युक्तेरित्यर्थः । यदि स्वशक्त्यैव ज्ञानादि तर्हि किमित्यनादिसंसारमग्नो जीवः कस्माच्च स्वात्मानं न मोचयति । तेन ज्ञायतेऽन्य ईश्वरोऽस्तीति भावः ॥ १० ॥ नन्वेवं जीवादन्यमीश्वरं प्रसाध्य कथं पुरुषेश्वरयोरिति तद्विरुद्धं

कथ्यत इत्यतस्तात्पर्यमाह ॥ न चेति । जीवान्यो हरिरित्यर्थः । तदन्येत्यंतद्भावप्रधानमित्याशयेन व्याचष्टे ॥ तयोश्चान्यत्वेति ॥ अपगमनेति । अपेत्युपसर्गार्थः । प्रयोजनेत्यर्थ शब्दार्थः । ननु कथं स्वरूपादपगमनं स्वरूपस्यानपायादित्यतस्ताद्विवृणोति ॥ अनर्थेति । तथा च पुरुषेश्वरयोर्जीवांतर्यामितया पुरुषरूपेण ज्ञानदातृबहिष्ठतयेश्वररूपेण मोक्षादिफलदातृभगवद्रूपयोरप्यपि किंचिदपि वैलक्षण्यं भेदो नास्तीत्यतस्तयोरन्यत्वकल्पना भेदधीरपार्थोऽनर्थकारिणीत्यर्थः । ज्ञानं चेति पादमसंगतिपरिहारायावतारयति ॥ ज्ञानेति । ज्ञानोत्पादनं । अंतःस्थरूपेणेति शेषः । ननु कथमनेन शंकापरिहारः स्वरूपज्ञानस्य प्रकृतिगुणत्वायोगादित्यतो व्याख्याति ॥ जन्य ज्ञानमिति । अत्रार्थे प्रमाणमाह ॥ स्वरूपेति । प्राकृतं ज्ञानमपरोक्षं । भक्त्यादिसाधनमपेक्ष्य तेनैवांतःस्थपुरुषरूपेण ॥ ११—१२ ॥ प्रकृतेरित्यादिश्लोकमसंगतिपरिहारायावतारयति ॥ जन्येति । पुरुषेश्वरयोरिति श्लोकार्थे सिंहावलोकनन्यायेन प्रमाणमाह ॥ अतस्थ इत्यादिना । मूलमुपलक्षणमित्याशयेनाह ॥ तथैवेति । ते सर्वेऽपार्थेत्यस्य तात्पर्यं ॥ अनर्थभागिन इति । तथा च प्रकृतेरित्यादेरयमर्थः ॥ स्थित्युत्पत्त्यंतहेतवः सत्त्वरजःस्तम इति प्रकृतेर्गुणाः । प्रकृतेर्गुणसाम्ये प्रलये आत्मनो जीवजातस्य ज्ञानादिस्वकार्योपादका न भवंति । सृष्टिकाले भवतीत्याह ॥ सत्त्व ज्ञानमिति । सृष्टिकाले ज्ञानं सत्त्वं सत्त्वगुणजन्यमित्यर्थः । एवं च जन्यज्ञानं प्राकृत प्रकृतिकार्यसत्त्वगुणकार्यमित्युक्त भवति । कर्म रजो रजोगुणकार्यं । अज्ञान तमस्तमोगुणकार्यमितीह श्रुत्योच्यत इत्यर्थः ॥ १२ ॥ इदानीमृषिभिरुक्ततत्त्वानां संख्याभेदं विवरितुं सर्वैरपि जीवान्यो भगवानंगीकार्य इत्युक्तं तत्स्वरूप वदन्नवैकादशपचत्रीनिति । स्वोक्ततत्त्वानि तावद्विविच्याह भगवान् ॥ गुणव्यतिकर इति । केचिद्भगवंतं स्वतंत्रतत्त्वमनंगीकृत्य गुणव्यतिकरः सृष्टिकाल एव स्वतत्रतत्त्व स्वभावत एव स्वतत्रतत्त्वं सूत्रमेव तथेति वदंति । तदयुक्तं । भगवत एव तच्छब्दवाच्यत्वादित्याशयेनैतानि विशेषणानि । काल शब्दार्थमाह ॥ काल इति । सर्वगुणपूर्णत्वादित्यर्थः । कल कामधेनुरिति हि पठंति । सत्त्वादिगुणानां महदाद्यात्मना व्यतिकरो विकारो यस्माद्भवति स भगवान्कालस्तच्छब्दवाच्यः । स्वतंत्रो भावः स्वभावः । सर्वाधारत्वात्सूत्रमित्यर्थः ॥ १३ ॥ १४ ॥ पुरुष इत्यादिना किं गण्यत इत्यतस्तद्दर्शयति ॥ नवेति । तत्र नवतत्त्वानि प्रदर्शयति ॥ पुरुष इत्यादिना । मे मम ॥१५॥ एकादशतत्त्वानि दर्शयति ॥ श्रोत्रमिति । ज्ञानजनने शक्तिर्येषां ते

ज्ञानशक्तय:। ज्ञानेंद्रियाणीत्यर्थः। वाक्पाण्युपस्थपाय्वंघ्रिकर्माणि। एतदाख्यानि कर्मेंद्रियाणि। उभयमिदं करिष्ये इदमित्थं करिष्य इति संकल्पाविकल्पात्मकं मन इत्येकादशतत्त्वान्युक्तानि। मे नवेत्यन्वयः ॥१६॥ पंचतत्त्वान्याह ॥ शब्देत्यादिना । ज्ञानेंद्रियविषयसमूहाः । कर्मेंद्रियविषयानाह। गर्तात्यादिना। ननु नवैकादशपंचेति पंचतत्त्वान्युक्तानि। तानि च शब्दस्पर्शेत्यादिनोक्तानीति गत्युक्तीत्यादि व्यर्थं। न पंचेति पंचकद्वयं विवक्षितं । तेन गत्यादीत्येतत्सार्थकमिति वाच्यं । तथाऽपि तत्र गत्यादीनां चतुर्णामेवोक्तत्वेन पचकद्वयाप्राप्तिरित्यतो व्याचष्टे॥ उत्सर्गस्येति। एकस्यैवेत्यर्थः । द्विविधत्वात्पायूपस्थरूपद्विविधेंद्रियविषयत्वेन द्विविधत्वादित्यर्थः । तथा च पायूपस्थविषयोरुत्सर्गयोर्द्विविधत्वमभिप्रेत्य मूले उत्सर्गेति सामान्येनोक्तं । तथा च कर्मेंद्रियविषया अपि पंचेत्युक्तं भवति । पंचकद्वयं नवैकादशपंचत्रीनित्यत्र पंच शब्देन विवक्षितमित्यर्थः । पंचेत्यस्य पंचपंचेति आवृत्तौ पंचकद्वयलाभ इत्याशयः । शिल्पं पाणिविषयः । आयतनमाश्रयः । साधनमिति यावत् । कर्मायतनानां कर्मसाधनेंद्रियाणां सिद्धयः कार्याणीत्यर्थः ॥१७॥ ननु सर्गादावित्यसंगतं किमुच्यत इत्यतस्तदवतारयति ॥ त्रीनिति ॥ गुणा इति ॥ वक्तुमिति । नवैकादशपंचत्रीनित्यत्र त्रीणि तत्त्वानि कानीत्याशंकायां त्रयो गुणास्त्रीनित्यनेन विवक्षिता इति वक्तुं गुणानां प्रवृत्तिप्रकारमाहेत्यर्थः । तथा चास्य जगतः सर्गादौ सृष्टिकाले कार्यकारणरूपिणी कार्यकारणात्मकजडप्रकृत्यभिमानिनी चित्प्रकृतिः सत्त्वादिभिर्गुणैस्तदभिमानिश्रीभूदुर्गारूपैर्जगद्धत्त इत्यन्वयः ॥१७॥ ननु तथापि पुरुषोऽव्यक्तमित्यादिना सृष्ट्यादिकं किमसंगतमेवोच्यते भगवदभिप्रेततत्त्वगणनाया जातत्वादित्यतस्तात्पर्यमाह ॥ कार्येति । पूर्वत्र ऋष्यादिमतानां युक्तिमत्वात्प्रामाणिकत्वमुक्तं । तत्प्रकारश्चोत्तरत्रोच्यते । तत्कथं युज्यते भगवन्मतविरोधित्वादित्याशंकायां परस्परानुप्रवेशात्तत्त्वानामिति विवक्षाभेदेनाविरोधप्रकार उक्तः । तत्र परस्परानुप्रवेश एव कुत इत्याशंकायां कार्यकारणभावस्य सत्वादित्युक्तग्रंथेन वक्तुं सृष्ट्युक्तिरुपपद्यते । कार्यकारणभावज्ञापनायेति भावः । कार्यकारणभावादन्योन्यानुप्रवेश इत्यत्र प्रमाणमाह ॥ सृज्येति । कार्यकारणेत्यर्थः । प्रवेशिनः प्रवेशवतः संतास्तिष्ठंतीत्यर्थः । उत्तमेषु नीचा भृत्यतया सांति। कुतः। उत्तमेषु नीचानां विशेषप्रीतिरूपकारणसद्भावात् । कारणीभूतोत्तमत्वोक्त्या कार्यभूतनीचत्वानामपि प्राप्तिः। तथा च नीचेष्वप्युत्तमाः संति । कुतः । नीचेषूत्तमानां विशेषप्रीतिरूपकारणसद्भावात् । तथा च नीचानां ग्रहणे उत्तमानामपि

प्राप्तेरिति भावः । तथा च हरिणाऽनुगृहीतः पुरुषो हिरण्यगर्भो व्यक्तं व्यक्तनाम्नीं सरस्वतीं सृष्ट्यर्थमीक्षते । तां निमित्तीकृत्य व्यक्त शब्दवाच्यरुद्रादिजगत्सृजतीत्यर्थः । व्यक्तादयो धारकत्वाद्धातु शब्दवाच्याः । तत्त्वानि विशकलिततया स्थिताः । स्तोत्रानंतर पुरुषस्य हरेरिच्छया सहता मिलिता अत एव लब्धवीर्याः प्रकृतेः प्रेरकलक्ष्म्याश्च बलाद्विकुर्वाणा विकार प्राप्नुवानाः सतोऽडं सृजंतीत्यर्थः । नवैकादशपंचत्रीनित्यत्रोक्तनवतत्त्वकथनपरपुरुष इति श्लोके कः पुरुष शब्देनोच्यत इत्यतस्त दर्शयति ॥ अन्वेकमिति । अयं भावः । नवैकादशेत्युक्तनवतत्त्वानि पुरुषमारभ्य क्षित्यंतानीति पुरुषः प्रकृतिरिति श्लोकेन तावदुक्तं ॥ अत्र यदि पुरुष शब्देन हिरण्यगर्भो विवक्ष्यते । तदैव नवैकादशपंचत्रीन् भावान् भूतेषु येन वै । ईक्षेतान्वेकमप्येषु तज्ज्ञानं मम निश्चितामिति श्लोकेऽन्वनंतरमेषु नवादितत्त्वेषु नियामकतया स्थितमेकं हरिमीक्षेतेत्युच्यमानं नियामकतया हरिप्रवेशकथनं युक्त स्यात् । नवतत्त्वेषु पुरुष शब्देन भगवद्ग्रहणे त्वन्वेकमप्येष्वित्युक्तभगवत्प्रवेशोऽनुपपन्नः । न हि हरेः स्वस्य स्वस्मिन्नियामकतया प्रवेशोऽस्त्यत एतन्नवतत्त्वप्रविष्टतया परमात्मनः पृथगुक्तत्वादत्र हिरण्यगर्भ एव पुरुष शब्दवाच्य इति । अत्र प्रमाणमाह ॥ यदेति । अत्रानुवादबलादित्थं योज्यं । परस्परमात्मनः । पृथगुक्तौ सत्यां पुरुष शब्देन विरिंचस्यैव वाच्यत्वं । यदा पुरुष शब्देन विरिंचस्य वाच्यता तत्र तदा व्यक्त शब्दवाच्यः शंकरो यदा व्यक्त शब्दवाच्यः शंकरस्तदाऽहंकार शब्देन स्कंदस्य वचनमित्यर्थः । अत्र चान्वेकमिति परस्य पृथगुक्तेः पुरुषो हिरण्यगर्भ एवेति भावः । तथा च पुरुष शब्दवाच्यहिरण्यगर्भप्रकृतिशब्दवाच्यरमाव्यक्तशब्दवाच्यरुद्राहंकारशब्दवाच्यस्कंदाश्चत्वारः पंचभूतानीति नव । एकादशेंद्रियाणि शब्दादिपंचकद्वय सत्त्वादयो गुणास्त्रयः स्वतंत्रो भगवानेक इति चतुस्त्रिंशत्तत्त्वानीति भगवतो वासुदेवस्य मतमित्युक्तं भवति ॥१८॥ ननु सप्तैव धातव इत्यादिना विवक्षाभेदेन सप्ततत्त्वानीत्युच्यते । तदयुक्तं । भगवन्मतोक्त्यनंतरं केचित् षड्विंशतिं प्राहुरपरे पंचविंशतिमित्युक्तत्वेन तत्प्रकारस्यानुक्तत्वादित्यतस्तत्प्रकारद्वय मूले भगवदभिप्रेतं स्वयं दर्शयति ॥ सत्त्वादीनिति । नवैकादशपंचत्रीनित्युक्तचतुस्त्रिंशत्तत्त्वानि पुरुषः प्रकृतिर्व्यक्तमित्यादिना दर्शितानि तन्मध्ये सत्त्वादित्रीणि तत्त्वानि कर्मेंद्रियविषयभूतान् गत्यादीन्पंचेत्यष्टौ विना पुरुषादीन्येव परमात्मना सह षड्विंशति तत्त्वानि ज्ञेयानीत्यर्थः । अत्र गत्यादीनां कार्याणां कारणेषु कर्मेंद्रियेषु प्रवेशो ज्ञातव्यः । सत्त्वादीनां कारणानां कार्येषु प्रवेशो

ज्ञातव्यः । पचविंशतितत्त्वानि दर्शयति ॥ महदिति । महदिति व्यक्तशब्दार्थोक्तिः । परमात्मना पुरुष शब्दवाच्येनेत्यर्थः । तथा च नवैकादशेत्युक्तविवरणात्मके पुरुषः प्रकृतिरिति श्लोके पुरुष शब्देन भगवान् प्रकृतिर्व्यक्त शब्देन महत्तत्त्वाभिमानी ब्रह्माऽहंकारो रुद्र इति चत्वारः । अत्राहंकार शब्देन स्कंदो न ग्राह्यः । अत्र यदा पुरुष शब्देनेति न्यायायोगात्पंचविंशतितत्त्व-पक्षे परस्य पृथगुक्त्यभावेन पुरुष शब्दस्य विरिंचपरत्वाभावेन व्यक्तो न शंकरोऽहंकारश्च न स्कंदः । तस्मात्पुरुष शब्देन परमात्मा प्रकृतिर्व्यक्तं ब्रह्माऽहंकारो रुद्रः स्कंदस्त्याज्यः । एवमेते चत्वारः पंचभूतान्येकादशेंद्रियाणि शब्दाद्याः पंचज्ञानेंद्रियविषया इति पंचविंशतिः । अत्रापि गत्याद्याः पंचसत्त्वादयस्त्रयस्त्याज्या एवेति स्पष्टं । एवं पंचविंशति तत्त्वसंख्यां प्रमाणेनाह ॥ विषयेति । विषय शब्देन पंचभूतानि शब्दाद्या अपि चोच्यंते । इंद्रिय शब्देनैकादशेंद्रियाणि । देवता शब्देन महदहंकारात्मकब्रह्मरुद्ररूप-देवताद्वयं । परमात्मना सहेति शेषः ॥ १९ ॥ सप्तैवेति पक्षं विवृणोति ॥ सप्तैवेति । यत्र पक्षे सप्तैव धातवस्तत्त्वानि तत्रैवं गणना कार्या । कथमित्यत आह ॥ अर्था इति । शब्दाद्या अर्था विषयाः खादय आकाशादिभूतानि चेत्युभयेऽपि विवक्षाभेदे-नैकाकारं गताः पंच । ज्ञानमुभयाधार आत्मा सप्तम इत्यर्थः । अत्र ज्ञानादिशब्दोक्तः क इत्यत आह ॥ ज्ञानेति । स्मृत आत्मशब्दतयेत्यर्थः । तथा चोभयाधारः पंचवर्गस्य ज्ञानशब्दोदितब्रह्मणश्चेत्युभयाधार आत्माधार आत्मा हरिरित्यर्थ उक्तो भवति । एके नवेत्युक्त तद्दर्शयति ॥ ततो देहेंद्रियासव इति । तन्म्याचष्टे ॥ तत इति । तत्र प्रमाणमाह ॥ सर्वेति । तथा च ततो ज्ञानं विनेत्यर्थः । अर्थाः खादयः पंच । आत्म शब्दोक्तः परमात्मा ग्राह्य इत्यर्थः । तथा चार्थाः खादयश्चैकाकारं च गताः पंच । आत्मा परमात्मा देहमानी दिवाकरः । इंद्रियमानींद्रः । असुः प्राण इति । नव तत्त्वानीत्यर्थः ॥ २० ॥ षट् केचि-दित्युक्तं पक्षं विवृणोति ॥ षडित्यत्रापीति । षडेव धातव इति पचभूतानि परः पुमान्हरिः षष्ठः षट्त्वसंख्यापूरण इत्यर्थः । अत्र षट्त्वसंख्या कार्यकारणभावेनान्योन्यप्रवेशो युक्त इत्याशयेन तामुपपादयति ॥ तैरिति । आत्मनः सकाशात्संभूतैस्तैः पंच-भूतैर्युक्त आत्मेदं जगत्सृष्ट्वा समुपाविशदित्यर्थः ॥ २१ ॥ चत्वारीति पक्षं विवृणोति ॥ चत्वारीति । यदा चत्वार्येव तत्त्वानीति पक्षस्तत्रापि । आत्मनो हरेः सकाशाज्जातानि तेज आपोऽन्नमिति त्रीण्यात्मैक इति गणना कार्येत्यर्थः । अन्नं पृथिवी ।

पृथिवी अन्नमिति श्रुतेः । अत्राप्यन्योन्यानुप्रवेशहेतुं कार्यकारणभावमुपपादयति ॥ तैरिति । तैस्तेजोऽबन्नैरिदमवयविनो ब्रह्मांडस्य जन्म जातमस्ति खल्वित्यर्थः । अत्र पदानां व्यवहितत्वादन्वयं दर्शयति ॥ अवयविन इति ॥ २१ ॥ एकादशपर इत्युक्तपक्षस्याविष्टतत्वात्स्वयं प्रमाणेनैव दर्शयति ॥ भूतानीति । पंचभूतानि शब्दाद्याः पंचतन्मात्राः परश्चैक इति एकादशतत्त्वानीत्यर्थः । मूले एकादशतत्त्वान्येतानीति कंठतोऽनुक्तिः कुत इत्यत आह ॥ भूतमात्रेति । सप्तदशतत्त्वकथनसमये भूतमात्रेत्युक्त्या दशतत्त्वानि लब्धान्येव । आत्मा तु वर्तत एवेत्येकादशतत्त्वानामर्थतः सिद्धत्वादनुक्तिरिति भावः ॥ २२ ॥ केचित्सप्तदश प्राहुरित्युक्तं विवृणोति ॥ सख्यान इति । सप्तदशतत्त्वानीति संख्याने गणनपक्षे एव गणनीयं । भूतमात्रेंद्रियाणि त्रीणि प्रत्येकं पंच पंच । पंचभूतानि पंचमात्राः पंचज्ञानेंद्रियाणीति । एवं सति पचदश एकमनसैकेन मनसा सहात्मा हरिः सप्तदशः स्मृतः । मनः षोडशसंख्यापूरक । आत्मा सप्तदशसंख्यापूरक इत्यर्थः ॥ २३ ॥ षौडशैक इत्युक्तं प्रकारं दर्शयति ॥ तद्वदिति । षोडशतत्त्वानीति संख्यानपक्षे तद्वदेव पंचभूतानि पंचमात्राः पंचेंद्रियाणीति पंचदशसंपन्नानि । षोडशमाह ॥ आत्मनेति । आत्म शब्देन मन उच्यते । तथा च मन एव षोडशमनात्मेति स्वतंत्राभाव एव प्राप्नोतीत्यतो व्याचष्ट ॥ आत्मनेति । परमात्मना सह विद्यमानं मनः । परमात्मसंनिधानयुक्तं मन इति यावत् । तथा च भगवत्सान्निधानपात्रस्य मनसः षोडशत्वेन ग्रहणे तत्सन्निहितो भगवानपि षोडशेनोक्तप्राय एवेत्यर्थः । अत्र प्रमाणमाह ॥ आत्मन इति । मनसाऽऽत्मनः परमात्मनो यः सन्निधिः सामीप्यं तत्स्थत्वात्तेन संनिहितत्वात् । तत्सान्निधानपात्रत्वादिति यावत् । तदुक्तितस्तस्य मनस उक्तितः । एके त्रयोदशेत्युक्तप्रकारं दर्शयति ॥ भूतेति । भूतानि पंचेंद्रियाणि पंचेति दश । मन आत्मेति द्वादशतत्त्वानि प्रतीयंतेऽतस्त्रयोदशेत्ययुक्तमतस्तात्पर्यमाह ॥ आत्म शब्देनेति । तथा चात्म शब्देन ब्रह्मपरमात्मनोरुभयोर्विवक्षितत्वात्त्रयोदशत्व युक्तमित्याशयः । अत्र प्रमाणमाह ॥ भूतेति । वरा उत्तमाः । नन्वस्त्वेवं यद्यात्म शब्दो विरिंचवाची च स्यात्तदेव कुतस्तस्य विरिंचवाचित्वे परमात्मवाचित्वे चाभिधानमाह ॥ आत्मेतीति ॥ २४ ॥ एवं नवविधत्वगणनाप्रकारं प्रदर्श्योपसंहरति ॥ इतीति । नानाप्रकारेण प्रसंख्यानं न्याय्यं प्रामाणिकं विदुषां मतेऽशोभनमघटित किमपि नास्ति । सर्वं विवक्षाभेदेन सुघटत्वाच्छोभनमेवेत्यर्थः ॥ २५ ॥ प्रसंगादुद्धवः प्रमेयांतरं

पृच्छति ॥ प्रकृतिश्चेत्यादिना । अत्र पुरुष शब्दार्थं व्याचष्टे ॥ यद्यपीति । तथाऽपीत्यध्याहारेण दृश्यते न भिदा तयोरित्येत-द्व्याचष्टे ॥ तथाऽपीति । वैलक्षण्यामिति भेद शब्दव्याख्यानं । भेद शब्दो वैलक्षण्यार्थ इत्यत्र प्रमाणमाह ॥ अतर चेति । प्रश्नाभिप्रायमाह ॥ तदिति । तत्रा च वैलक्षण्यार्थे ज्ञाने कि कारणमित्याशयः ॥ २५ ॥ अन्योन्याश्रयादित्यनंतरमध्याहार्य-माह ॥ अन्योन्येति । एवकारव्यवच्छेद्यं स्वयमेव दर्शयति ॥ नं त्विति । तथा चान्योन्याधारत्वेन साम्यमेव प्रतीयतेऽत एतादृश-भ्रांतौ च किं कारणमित्याशयः । नन्वेवमज्ञानं भ्रांतिर्वा स्वस्य न संभवत्येव स्वेनात्मविलक्षणावित्युक्तत्वेन तथा पद्मेशेति संबोधितत्वेन प्रकृत्यभिमानिरमोत्तमत्वज्ञापनसद्भावेनानन्याधारत्वेन प्रकृत्याद्याधारत्वस्य निश्चितत्वादतो मे सशयमित्याद्ययुक्त-मित्यत उक्तं ॥ मदमतीनामिति । तथा च तदीयं संशयं स्वस्मिन्नाहृत्य लोकोपकाराय पृच्छतीति भावः ॥ २६ ॥ मंदमतीनां भगवतोऽनन्याधारतया प्रकृत्याधारत्वं न दृश्यते प्रत्युताव्यक्ताधारकत्वेनैव दृश्यत इत्यत्र प्रमाणमाह ॥ आधार इति । यद्यपीति शेषः । नेत्यनंतरमन्य इति शेषः । अव्यक्ते तत्कार्ये देहादौ तिष्ठतीत्यव्यक्तगो जीवो यथाऽव्यक्ताधारत्वेन दृश्यते । तद्वद्धरिरपि मंदचेतसामव्यक्ताधारत्वेन प्रतीयत इत्यर्थः ॥ तथा चायं श्लोकार्थः । प्रकृतिर्जडप्रकृतिः पुरुषः परमात्मा चेत्युभौ यद्यप्यात्म-विलक्षणौ । आत्म शब्दः स्वरूपार्थः । स्वरूपत एव विलक्षणौ प्रकृतेर्जडत्वात्पुरुषस्य चातथात्वात् । तथाऽपि तयोः प्रकृति-पुरुषयोर्भिदा वैलक्षण्य न दृश्यते । तत्कुतो न दृश्यते तद्वैलक्षण्यज्ञाने कि कारणमिति भावः । वैलक्षण्यं न दृश्यत इत्येव न प्रत्युतान्योन्याश्रयात् । देहादौ पुरुषस्य सत्वेन देहादिप्रकृतेः पुरुपाधारत्वात्पुरुषस्यापि प्रकृत्याधारताया आगमसिद्धायाः सत्वे-नान्योन्याश्रयस्य सत्वेनान्योन्याश्रयत्वमेव दृश्यते उभयोः साम्यमेव दृश्यते सा च भ्रातिरिति साम्यभ्रमे च किंकारणमित्या-शयः ॥ २७ ॥ अन्योन्यापाश्रयादित्युक्त विवृणोति ॥ प्रकृताविति । देहादिरूपायां प्रकृतौ । तदाधारत्वेनेति यावत् । आत्मा हरिर्लक्ष्यते ज्ञायते । तथा च प्रकृतिश्चात्मनि । तदाधारत्वेनेति यावत् । लक्ष्यतेऽत उभयोः साम्यमेव भ्रात्या प्रतीयत इति भावः । पद्मेश लक्ष्मीपते । नैपुणैः कुशलैः । कथं मदीयवचसा संशयच्छेदद्वारा सम्यग्ज्ञानोत्पत्तिरित्यत आह ॥ त्वत इति । ज्ञानं समीचीनमुत्पद्यते । तनुशक्तितः । शक्तिरत्र बुद्धिः स्वल्प ज्ञानत्वाद्विद्यमानस्यापि ज्ञानस्य प्रमोपो नाशस्तिरोधानं वा त्वत्त

एव भवतीत्यर्थः । तनुशक्तितस्तामसदेहबलाद्वा मत्ज्ञानमन्यस्मात्त्वया संपाद्यतामिति न वाच्यमित्याशयेनाह ॥ त्वमेवेति । माया-सामर्थ्यं गतिं स्वरूपं ॥ २७ ॥ एवं पृष्टे प्रकृतिपुरुषयोर्विद्यमानवैलक्षण्यज्ञानेऽन्योन्यापाश्रयत्वेन साम्यज्ञानं च तमोगुण एव कारणमिति वक्तुमुपोद्धातमाह भगवान् ॥ प्रकृतिरित्यादिना । अत्र किमसंगतमेवोच्यत इत्यतः प्रकृतिपुरुषश्चेतीति वाक्यं सर्वं वाक्यं सावधारणमिति न्यायेन योजयति ॥ प्रकृतिरिति । यद्यपीति शेषः । इत्येवेत्यस्यार्थमाह ॥ अन्योन्येति । व्यवहितत्वादन्वयं प्रदर्श्य व्याचष्टे ॥ एष विकल्प इति । तथाऽपीति शेषः । एष इत्यस्य व्याख्यानं ॥ वैलक्षण्यादर्शनमिति । विकल्प इत्यस्य व्याख्यानं ॥ विरुद्धकल्पनमिति । विरुद्धकल्पनस्य कारणमित्यर्थः । सर्वं वाक्यं सावधारणमिति न्यायेनैवेत्युक्त भवति । तथा च विद्यमानवैलक्षण्याज्ञा-नेऽन्योन्यापाश्रयत्वेन साम्यभ्रमे निमित्तमित्यर्थः । वैलक्षण्यज्ञानेऽपि निमित्तमुच्यते ॥ वैकारिकः सर्गो गुणव्यतिकरात्मक इति । किमनेन निमित्तमुक्तं स्यादित्यतोऽन्वयं दर्शयंस्तद्व्याख्याति ॥ यस्मादित्यादिना । गुणव्यतिकरात्मकः सर्गो गुणवैषम्यरूपा सृष्टिरित्यर्थः । वैकारिक इत्यस्याहंकारप्रभेदवैकारिकाहंकारप्रतीतिं वारयितुमाह ॥ विकारेति । विकारोऽहंकारतत्त्वं । महत्तत्त्वविकारत्वात्तस्य । तथाऽपि हेतुत्वाप्रतीतेर्मूलाभिमतं दर्शयति ॥ स चेति । यो विकारनिर्मितः स चेत्यर्थः । गुणव्यतिकरः सृष्टिरित्यर्थः । अहंकारेण जायमानः सर्गः सत्त्वप्रधानो रजःप्रधानस्तमःप्रधानश्चेति । तत्राद्यो देवतादेहसर्गः । द्वितीय इंद्रियसर्गः । तृतीयो भूतसर्गः । ततः किमित्यत आह ॥ तत्रेति । विरुद्धकल्पनं वैलक्षण्याज्ञानद्वारा भवतीति योज्यं । तथाऽपि प्रकृते किं कारणमुक्तं स्यादित्यत आह ॥ तस्मादिति । अत्र वैलक्षण्याज्ञाने । तमसोऽज्ञानमेव चेत्यज्ञानस्य तमः कार्यताप्रसिद्धेः ॥ तथा चायमर्थः ॥ यद्यपि प्रकृतिः पुरुषश्चेत्येवमन्योन्यविलक्षणावेव । तथाऽप्येष विकल्प एव । एष वैलक्षण्यदर्शनाभावोऽन्योन्यापाश्रयत्वादिना प्रकृति-पुरुषयोः साम्यादिभ्रांतिर्विरुद्धरूपकल्पने कारणं । वैलक्षण्यदर्शनाभावोऽपि कुत इत्यतस्तत्रापि हेतुरुच्यते ॥ वैकारिक इति । गुणव्यतिकरात्मकः सर्गो गुणवैषम्यापरपर्यायः सर्गो वैकारिकोऽहंकारकार्यः । तथा चाहंकारतत्त्वजन्यसर्गत्रयमध्ये यस्तमः-प्रधानसर्गस्तद्वंत एतेषामेव । वैलक्षण्याज्ञानद्वारा विरुद्धकल्पनादिकं भवतीति तमोगुण एव मूलकारणमित्यर्थः ॥ २९ ॥ ममांगे-त्युत्तरश्लोकस्य संगत्यप्रतीतेस्तामाह ॥ तत्रापीति । एवं तमोगुणस्यैव कारणत्वे सिद्धेऽपि कारणांतरमप्यस्तीत्युच्यत इत्यर्थः ।

अत्रैवकारोऽयोगव्यवच्छेदार्थः । न त्वन्ययोगव्यवच्छेदार्थः । तथात्वे ईश्वरेच्छारूपकारणोक्त्ययोगात् । प्रकृतिर्लिंगदेह इच्छा चेत्यनंतरमित्याह ॥ ममेतीति शेषः । अत्राहंकारकार्यविशेषस्य वैकारिकाहंकारस्य त्रैविध्यमुच्यत इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे ॥ विकारादिति । महत्तत्त्वस्य विकारादित्यर्थः । त्रिविधोऽपि तामसादिभेदेन त्रिविधोऽप्यहंकारो वैकारिक इत्युच्यत इत्यन्वयः । तत्र हेतुर्विकाराज्जातत्वादिति । अहकारतत्त्वस्य वैकारिक शब्दवाच्यत्वे प्रमाणमाह ॥ वैकारिक इति । महान्महत्तत्त्वं । तथाऽहंकारश्च वैकारिके वैकारिक शब्दवाच्यः । तथाऽहंकारतत्त्वे यः सात्त्विकोऽशो देवतादेहमनसोरुत्पत्तिहेतुः । साऽपि वैकारिक इत्युच्यत इति त्रिधा वैकारिकशब्दवाच्यास्त्रय इत्यर्थः ॥ तथा चायमर्थः ॥ हे अंग । अंगेति प्रियसबोधन । न केवलं तमोगुणः किं नाम गुणमयी सत्त्वादिगुणात्मिका ममाधीना माया प्रकृतिर्लिंगदेहरूपा । तात्पर्ये ईश्वरेच्छेत्युक्तत्वात् च शब्दस्य मायेत्यनेनापि संबंधः कार्यः । गुणमयी ज्ञानानंदादिगुणात्मिका मम माया चेच्छा च गुणैः सत्त्वरजस्तमोगुणैरनेकधा विकल्पबुद्धिं निर्गुणत्वप्रकृतिसाम्यादिभ्रमरूपां बुद्धिं । च शब्दात्समीचीनां बुद्धिं च । विधत्ते जनयतीत्यर्थः । परंपरयैतादृशमायाकार्यस्याहंकारस्य त्रैविध्यमाह ॥ वैकारिक इति । एकमहकारतत्त्वमध्यात्ममथैकमाधिदैवमन्यदाधिभूतमित्येवं वैकारिकोऽहंकारस्त्रिविध इत्यर्थः ॥ ३० ॥ ननु दृग्रूपमित्यादिना किमसंगतमेवोच्यत इत्यतस्तात्पर्यमाह ॥ अध्यात्ममिति । अध्यात्मादिभेदेनाहंकारस्य त्रैविध्यमुक्तं । तत्राध्यात्मसंज्ञकोऽहंकारः क इत्यतोऽध्यात्ममिंद्रियाण्यहंकार इत्युच्यंते । तैजसाहंकारकार्यत्वादित्याशयः । अतो नासंगतिः । इंद्रियाणीत्युक्त्यैवं त्वगादीत्यादेरपि तात्पर्यमुक्तं ज्ञातव्य । अतो विकल्पः परस्परं सिद्ध्यतीत्यध्यात्मादित्रयाणां विकल्पहेतुत्वमुक्तं । तत्तात्पर्यमाह ॥ तैरेवेति । अध्यात्मादिभिरित्यर्थः । श्लोकद्वयतात्पर्यं प्रमाणेनाह ॥ अहकार इति । अनेन परस्परं सिद्ध्यतीत्यस्य तात्पर्यमुक्तं भवति । नन्वहंकारभेदानामध्यात्मादीनां परस्परं मिलितानामेव ज्ञानजनकत्वे मुक्तौ अध्यात्मादिभेदभिन्नाहकाराभावात्ज्ञानं न स्यादित्यत आह ॥ सम्यगिति । अनेनात्मा स्वयानुभूत्याऽखिलसिद्धिरित्यंशस्य तात्पर्यमुक्तं । यत्सम्यग्ज्ञानं तद्धरेः शक्त्या ज्ञायत इति सर्वं सम । तत्सम्यग्ज्ञान मुक्तस्य विशेषतो हरेः शक्त्या जायत इति योज्यं । तर्हि मुक्तौ स्वोत्तमदेवानामकिंचित्करत्वमुक्तं स्यात्तत्राह ॥ देवतेति । कुत इत्यत उक्त ॥ नित्यमिति । तासां देवतानां प्रतिबिंबत्वात् ।

तदधीनत्वे सति तत्सद्भावादित्यर्थः। ननु निजज्ञानं हरिशक्त्या भवत्वथाऽपि बाह्यपदार्थविषयं यज्ज्ञानं तज्जडाहंकारकार्येंद्रियादिना जायत इत्यवश्य वाच्यत्वेन तत्राप्यध्यात्मादिभेदभिन्नाहंकारासिद्धिरित्यत आह ॥ बाह्येति। बाह्यपदार्थविषयं ज्ञानमित्यर्थः। जडाहंकृतेर्यदि न भवति तर्हि कस्माद्भवतीति पृच्छति ॥ कि त्विति। उत्तरयति ॥ स्वरूपेति। स्वरूपशक्त्यैव बाह्यज्ञानमित्यत्र प्रमाणांतरं चाह ॥ पश्यन्नपीति। पश्यति मुक्तः। जडं जडाहंकारतत्त्व। एषामुपराम इत्यस्यार्थमाह ॥ एषामिति। अध्यात्मादीनां। ननु दृगित्युक्तत्वात्पुनश्चक्षुर्ग्रहणमतिरिच्यत इत्यत आह ॥ चक्षुरितीति। चित्तयुक्तत्वावधारणार्थमित्यर्थः ॥ ३१ ॥ योऽसाविति श्लोके उद्देश्यविधेयं च यथास्थितप्रतीतिनिवारणाय दर्शयति ॥ योऽसाविति। विकारोऽहंकारः। गुणक्षोभो महत्तत्त्वं तेन कृतस्तज्जन्यो मोहः। विकल्प इत्यस्यार्थः ॥ भ्रमहेतुरिति ॥ ३२ ॥ आत्मापरिज्ञानमय इत्यत्र साध्याप्रतीतेस्तद्दर्शयति ॥ आत्मा त्विति। परिज्ञानं सम्यग्ज्ञानं तत्स्वरूपो यतः। अत इति शेषः। भिदेत्येतन्न प्रथमांत किं नाम भिच्छब्दस्येयं तृतीयेत्याशयेन व्याचष्टे ॥ भिदेति। ज्ञानामिति शेषः। अस्तीत्यादेरर्थमाह ॥ विद्यमानमिति। वस्तुतो जीवेश्वरभेदादिकं विद्यमानं तन्नास्ति वस्तुतोऽविद्यमान जीवेश्वरैक्यादिकमस्तीत्येवं कथनमेव विवाद इत्यर्थः। अयं विवाद इत्यत्र प्रमाणमाह ॥ असदिति। ऐक्यादि सत् भेदादि। एव भेदान्। एवं प्रकारेणेति यावत्। हरीत्यादि मत्तः पराङ्वृत्तेत्यादेस्तात्पर्यं। सदैव प्रवर्तत इति व्यर्थोऽपि नैवोपरम इत्यस्य तात्पर्यं ॥ तथा चायं सार्धश्लोकत्रयार्थः ॥ अध्यात्मादिकमुदाहरति ॥ दृगित्यादिना। रंध्रे गोलके दृक् चक्षुरिंद्रियं। अध्यात्मं तैजसाहंकाररूप परत्र देहाद्बहिर्यद्रूपं तदधिभूतं तामसाहंकारकार्यं परत्र दिवि योऽर्कस्तदधिदैवं वैकारिकाहंकारकार्यं। किमनेन प्रयोजनमित्यत आह ॥ परस्येति। असौ विकल्पः। समीचीना सिद्धिश्च। परस्पर देवतातदभिमन्यमानेंद्रियविषयैस्त्रिभिः सिद्ध्यति न स्वतः। एकैकस्मान्न। न हि चक्षुषोऽभावे देवताविषयाभ्यां विषयाभावे इतराभ्यां देवताभावे चेतराभ्यां ज्ञानमुत्पद्यत इत्यर्थः। ननु तर्हि मुक्तावेतेषां चक्षुराद्यध्यात्मादीनामभावात्ज्ञानं न स्यादित्यत आह ॥ आत्मेति। एषां प्रकृतिप्राकृतेंद्रियादीनामुपरमे मुक्तौ य आद्य आत्मा हरिः स एव स्वयानुभूत्या स्वशक्त्या। सम्यग्ज्ञानं हरेः शक्त्येत्युक्तेः। अखिलानां मुक्तानां सिद्ध्यसिद्धी। सम्यग्ज्ञानाज्ञानयोः प्रद इत्यर्थः। मुक्तानामपि हरिविषये ज्ञानमस्त्येव।

तद्दाता हरिरिति द्रष्टव्यं । द्व्यूपमित्युक्तन्यायमन्यत्राप्यातिदिशति ॥ एव त्वगादीति । अत्रादि पदेन तद्विषयाः स्पर्शाद्या ग्राह्याः । चित्तयुक्तं त्वगादि । अध्यात्मादिभेदेन त्रिविधमित्यर्थः । तथा च चित्तापरपर्यायमनोयुक्तास्त्वगाद्या इंद्रियाण्यध्यात्मं तैजसाहंकारकार्यं तद्विषयाः स्पर्शाद्या अधिभूतं तामसाहकारकार्यं तद्देवताधिदैवं वैकारिकाहंकार्यमिति भावः । अध्यात्मादिभेदभिन्नाहंकारस्वरूपं वदन्प्रकारान्तरेणापि त्रैविध्यमाह ॥ योऽसाविति । योऽसौ महाख्यविकल्पहेतुर्विकारोऽहंकारः स गुणानां क्षोभः क्षोभजन्यं महत्तत्त्व तत्कृतस्तज्जन्यः । पुनस्तत्स्वरूपमुच्यते । प्रधानं प्रकृतिर्मूलं । महत्तत्त्वद्वारा कारणं यस्य तत्तथोक्तं । जगतः प्रसूतिः सृष्टिर्यस्मात्तज्जगतः प्रसूतिर्वैकारिकस्तामसेंद्रिय इंद्रियजनकस्तैजसाहंकारश्चेति त्रिवृत् । त्रीन्प्रभेदान्वृणोतीति त्रिवृदेतादृशमहमहंतत्त्वं । मकारांताव्ययमेतत् । नन्वहंकारादिवज्जीवस्वरूपमपि किं गुणक्षोभजन्यं नेति प्रसंगादाह ॥ आत्मेति । यतोऽयमात्मा जीवः परिज्ञानमयोऽतो न गुणक्षोभकृत इत्यर्थः । अहंकारस्य विकल्पहेतुत्वमुक्तं । तत्र विकल्पापरपर्यायविवादस्वरूपमाह ॥ विवाद इति । अर्थनिष्ठः पदार्थनिष्ठो विवादो नामासदस्तीति सन्नास्तीति भिदा । अर्थविपर्ययेण ज्ञानमेवेत्यर्थः । नन्वेतद्विवादानुपरमः केषां केषां चोपराम इत्यत आह ॥ व्यर्थोऽपीति । स्वलोकात्स्वाश्रयान्मत्तः परावृत्तधियां मत्पादाब्जाविमुखानां पुंसां व्यर्थोऽपि निष्प्रयोजनोऽपि विरुद्धप्रयोजनोऽपि वा नैवोपरमेत सदैव प्रवर्तेत इत्यर्थः । हरिपादाब्जे धीमतामेव पुंसामुपरतो भवतीत्याशयः ॥ ३१–३३ ॥ मत्तः परावृत्तधियामिति श्रुत्वोद्धवश्चोदयति ॥ त्वत्त इति । त्वत्तः परावृत्तधियो जीवा उच्चावचैः स्वकृतैः कर्मभिरुच्चात्रचान्यथा कथ गृण्हति विसृजंति विसर्जयति च तत्प्रमेयं ममाख्याहीत्यर्थः । नित्यस्य जीवस्य देहसंबंधोत्पत्तिर्नाम कीदृशी वियोगापरपर्यायमरणं च नाम कीदृशं जीवस्य नित्यत्व च केन प्रमाणेन ज्ञातव्यं । देहान् गृण्हंतीत्युक्त्या जीवस्य देहांतःस्थत्वं देहस्य बहिष्ठस्थत्वं चार्थाल्लब्धं तत्रापि को हेतुरिति प्रश्नाशयो वर्णनीयः । एवं सत्युत्तरग्रंथः सर्वोऽपि संगच्छते । कीदृशं तत्प्रमेयं । अनात्मभिरजितमनस्कैरात्म शब्दत्वाच्यवद्भिर्नैर्वा दुर्विभाव्यं दुर्विचिंत्यं । नन्वेतत्प्रमेयं विद्वांसो जानीयुरिति चेत्तत्राह ॥ न हीति । अंचाति । अंचु गतिपूजनयोरिति धातोर्नावगच्छंतीत्यर्थः । तत्र हेतुर्वंचिताः । तव माययेति शेषः ॥ ३४ ॥ ३५ ॥ तत्र देहमरणप्रकारमादौ दर्शयति ॥ मन इति । अत्र लिंगदेह एव स्थूलदेहात्मना विक्रियते ।

सैव जनिस्तस्यैव मरणे स्थूलभागापगत्या सूक्ष्मतयाऽवस्थितस्य देहांतरे पुनः स्थूलतया विकारो भवतीति वस्तुगतिः । एवं च नृणां विद्यमानमिंद्रियैर्दशभिः पंचभूतैश्च युतं मन एव पोडशकलात्मकं । लिंगशरीरमिति यावत् । कर्ममयं कर्मप्रधानकं । जीवकर्मसहकृतमिति यावत् । यद्वा । कर्तृत्वात्कर्म भगवान् तत्प्रधानकं । तत्प्रेरितमिति यावत् । यदा लोकात् । ल्यबूलोपनिमित्तेयं पंचमी । पूर्वलोकं शरीरं परित्यज्यान्यं लोकं प्रयाति तदा तदन्वात्मा जीवोऽपि तत्र देहे वर्तते लिंगदेहबद्धः सन् देहांतरं प्राप्नोतीत्यर्थः ॥ ३६ ॥ एतदेव विशदयति ॥ ध्यायन्निति । षोडशकलासु मनसः प्राधान्यान्मनोग्रहणं । दृष्टान् श्रुतान्वा विषयान्ध्यायन् अत एव सीदद्विपन्नं कर्मतंत्रं कर्माधीन मनो हि यस्मादुद्यद्देहाद्देहांतरं प्रत्युद्गतं भवति । तदा तु तदनु जीवस्यार्थस्मृतिः पूर्वदेहेऽनुभूतपदार्थस्मृतिः शाम्यति नश्यति ॥ ३७ ॥ इदमेव मरणमित्याह ॥ विषयेति । अस्य दुर्योज्यतयाऽर्थाप्रतिपत्तेरन्यथाप्रतीतेश्च व्याख्याति ॥ विषयेति । नात्मानं यत्स्मरेदित्यस्य तात्पर्यं ॥ पूर्वदेहस्मरणमिति । तथा चेत्थं योजना । जंतोर्मनो विषये उत्तरदेहेऽभिनिवेशेन कस्यचिद्धेतोः कस्मिंश्चिन्निमित्ताद्भगवन्मायालक्षणरूपादात्मानं पूर्वदेहं न स्मरेत् । उत्तरत्र यत्प्राप्यं तदेव स्मर्यते नान्यत् । य यं वापीत्युक्तेः । विष्णुमाया तदा तेषां मनो बाह्यं करोति हीत्युक्तेश्चेति यावत् । साऽत्यंतविस्मृतिरेव मृत्युरित्यर्थः ॥ ३८ ॥ एवं मरणं निरूप्य जन्म निरूपयति ॥ जन्म त्विति । हे भूरिद बहुदातरुद्धव । पुंसो देहादौ सर्वभावेनात्मतया सर्वप्रकारेण ममेदमित्यात्मीयत्वेन विषयस्वीकृतिं देहाभिमानं जन्म प्राहुः । अविद्यमानाभिमानानिवेश एव जन्मेत्युक्तं । तत्राभिमानस्याविद्यमानत्वे दृष्टांतः स्वप्नो मनोरथ इति । स्वप्नसंबंधी मनोरथसंबंधी चाभिमानो यथाऽविद्यमानस्तद्वदिति योज्यं । इमं दृष्टांतं विशदयति ॥ स्वप्नमिति ॥ ३९ ॥ यथाऽसौ जाग्रदवस्थापन्नो जीवः प्राक्तनं पूर्वदृष्टं स्वाप्नं स्वप्नसंबंधिनं मनोरथसंबंधिनं चार्थं न स्मरति । तदर्थयोरविद्यमानत्वादित्यर्थः । कुत इत्यतस्तदेवोपपादयति ॥ तत्रेति । तत्र स्वप्ने यतोऽपूर्वं चापूर्वमेव वस्तुतः पूर्वं जाग्रत्यविद्यमानमेव स्वस्य प्राप्तगजादिदेहं पूर्वमिव पूर्वानुभूतमेवायं सर्वदा मम विद्यमान एवायं देह इति भ्रांत्या पश्यति । अत एवं जीवस्वरूपे वस्तुतोऽविद्यमान एव देहसंबंधोऽभिमानप्रयुक्तभ्रांत्या प्रतीयत इत्याशयः ॥ ४० ॥ ४१ ॥ नन्वेवं देहस्यैव जीवस्वरूपेऽपि जननादेः सद्भावे को विशेषो देहांतरस्येति चेन्न । जीवस्वरूपस्य नित्यत्वात् । तत्कुतः सिद्ध-

मिति चेत्पूर्वोत्तरकालेषु स्वसत्तावगाहिप्रत्यभिज्ञाबलादित्याह ॥ ईदृशेति । इमं श्लोकं दुर्गमार्थत्वाद्व्याचष्टे ॥ ईदृश इति । वर्तमानो वर्तमानकालवर्त्येभ्यो भविष्यत्कालसंबंधीत्यर्थः । ईदृशायास इत्यनंतरं मूले इति शब्दोऽध्याहार्य इत्यशयेनान्वयं दर्शयति ॥ इतीति । त्रैविध्यं त्रिविधकालवर्तित्वं । विज्ञाय वस्तुनीत्यस्यार्थमाह ॥ विज्ञायेति । नन्वीदृशश्चासावायसश्चासौ सश्चेतीदृशायस इति भवेत् । ईदृशायास इति दीर्घः कथमत्राह ॥ दीर्घेति । संहिताकाले श्रूयमाणस्य दीर्घस्य पदकाले लोप इत्यर्थः । अत्र वैदिकं दृष्टांतमाह ॥ यत्रात इति । यत्र ते आहुरिति पदकाले दीर्घस्याश्रवणेऽपि संहिताकाले यत्रात आहुः परमं जनित्रमिति दीर्घः श्रूयत इत्यर्थः । अत्रार्थे नियामकं महाव्याकरणसूत्रं पठति ॥ क्षैप्र इति । स्वरविशेषस्य संज्ञा क्षैप्रे स्वरे संहिताकाले प्रयुज्यमानदीर्घस्य पदकाले लोप इत्यर्थः । अन्ये तु क्षैप्रेयज्ञानमंतरेण पुरुषार्थो न स्यात्तत्र क्षिप्रं शीघ्रं प्रवर्तनीयमिति ज्ञापनार्थं प्रयुक्तो दीर्घः पदकाले लुप्यत इति सूत्रार्थः । तथा च जीवस्य त्रिकालवर्तित्वमवश्यं ज्ञातव्यं । तमंतरेण पुरुषार्थो नेति ज्ञापयितुं पदकाले दीर्घलोप इत्याशय इत्याहुः । बहिरंतर्भिदाहेतुरित्यस्यार्थमाह ॥ अयमेवेति । जीवस्य त्रिकालावस्थायित्वेन नित्यत्व देहस्य तदभावश्चेत्ययमेवार्थः । भिद्यत इति भिदा विशेष इत्याशयेन विशेषेत्युक्तं । बहिष्ठत्वांतस्थत्वरूपविशेषस्य हेतुरित्यर्थः । कयोरित्यतो मूले विशेषमभिप्रेत्याह ॥ आत्मानात्मनोरिति । जीवदेहयोरित्यर्थः । यथा मणिष्वंतः सत्रं । एवं जीवोऽनेकदेहप्राप्तावपि सदा तदंतरेवास्ति नित्यत्वात् । देहस्तु स्वरूपाद्बहिरेवास्ति । अनित्यत्वादित्याशयः । जना सज्जनकृत्यर्थेति दृष्टांतं विवृण्वन्दार्ष्टांतिकं च दर्शयति ॥ यथेति । हिरण्यकशिपुप्रल्हादादौ व्यभिचारवारणाय प्राय इत्युक्तं । अनित्यत्वात् । उपलक्षणमेतत् । अनात्मत्वाच्चेति ग्राह्य । जडत्वादित्यर्थः । लिंगदेहस्येति शेषः । अनात्मत्वमनित्यत्वं च ग्राह्यं । देहादेस्तद्विकारिस्थूलदेहादेरित्यर्थः ॥ तथा चायं श्लोकार्थः ॥ ईदृशायासेत्यविभक्तिको निर्देशो विसर्गलोपो वा । वस्तुनि जीवितत्वे विज्ञाय सम्यग्विज्ञाने सति ईदृशायास इति त्रैविध्य भाति । य ईदृशो वर्तमानकालवर्ती स एवायासो भविष्यदतीतकालवर्ती चेति त्रिकालवर्तित्वरूप नित्यत्व प्रत्यभिज्ञया निश्चीयत इत्यर्थः । अनेनोद्धवकृततृतीयप्रश्नस्योत्तरमपि जातमित्याह ॥ ॥ इति । आत्मनानात्मनोः अनात्मनोनारिकेल कपालतदंतर्गतफलवद्बहिष्ठत्वांतस्थत्वाख्यो भिदा या विशेषहेतुः स एव नित्यत्वादिगुण । यनेकदेहप्राप्तावप्यंतरेवास्ति ।नित्यत्वात् ।

देहस्य च स्वरूपानुबंधित्वाभावेनानित्वाज्जीवाद्बहिरेवास्तीति बहिरतस्थत्वरूपविशेषो युज्यत इत्याशयः । ननु देहस्यानात्मत्वं नाम जडत्वमनित्यत्वं च कुत इति चेदुच्यते । अस्य देहस्य लिंगशरीरविकारित्वेन तत्कार्यतया तद्यादृश तादृशमेव तत्र जडत्वानि त्यत्वं चातोऽयं देहोऽपि तादृश एवेति ज्ञायते । तथा च प्रयोगः । अयं देहो नात्माऽनित्यश्च तादृशकारणजन्यत्वात्तद्यादृशकारण जन्यं तत्तादृशमिति । तत्र दृष्टांत उच्यते ॥ जन इति । जनोऽसज्जनो यथा सज्जनकृत् । तथा च तद्दोरात्म्यात्पुत्रदोषाज्जन्यं ज्ञायते एवमित्यर्थः ॥ ४१ ॥ एवं देहस्यादावुत्पत्तिरायुःसमाप्त्यनंतरं मरणमिति दीर्घकालावच्छेदेन जननमरणमुपपाद्य तथा नापि प्रतिक्षणमप्युत्पत्तिविनाशौ स्त इत्याह ॥ नित्यदेति । हे अंग उद्धव । भूतानि तत्कार्याणि देहादिजडानि नित्यदा प्रतिक्षणं भवंत्युत्पद्यंते । न भवंति च । केन कारणेनेत्यत आह ॥ अलक्ष्यवेगेनानाज्ञातगतिमता क्षणादिकालसंबंधरूपकारणेनेति । ननु प्रतिक्षणोत्पत्त्यादिक्रमनुपलंभबाधितमित्यतोऽनुपलंभो नाभावप्रयुक्तोऽपि तु सूक्ष्मताप्रयुक्त इत्याह ॥ सूक्ष्मत्वादिति । तज्जननादिकं न दृश्यते चक्षुषा ॥ ४२ ॥ तत्र दृष्टांतमाह ॥ यथेति । अर्चिषां दीपज्वालानां स्रोतसां प्रवाहाणां वनस्पतेर्वृक्षस्य फलानां प्रतिक्षणमुत्पत्त्यादयः कालेन यथा कृतास्तथैव सर्वजडभावानां पदार्थानां वयोऽवस्था वयोनिमित्तकबाल्यकौमाराद्यवस्थाः कालेन कृता इत्यर्थः ॥ ४३ ॥ उक्तमेव दृष्टांतं विवृणोति ॥ सोयऽमिति । नन्वत्र सोऽयमिति प्रत्यभिज्ञाया भ्रांतित्वमुच्यते तदनुप पन्नं । तथात्वे प्रतिक्षणमुत्पतिविनाशांगीकारेण बौद्धमतापत्त्या तन्निरासकत्युक्त्यभवादित्यतो मूलं योजयति ॥ सोऽयमेवेति । तथा च प्रत्यभिज्ञा द्विविधा । सावधारणा निरवधारणा चेति । तत्राद्या भ्रमरूपा । अत्यंताभेदविषयत्वात् । जडे च भेदा भेदसद्भावात् । द्वितीया तु भेदाभेदविरोधित्वात्प्रमैवेति ॥ तथा चायमर्थः ॥ नञोऽध्याहारोऽत्र कार्यः । अर्चिषामनेकदीप-ज्वालानां समूहे सोऽयं दीप इति गीर्व्यवहारो धीः प्रत्यभिज्ञा च न मृषा प्रत्युत स एवायमिति प्रत्यभिज्ञैव मृषा यथा वा स्रोतसां प्रवाहाणां समूहे तदिदं जलमिति धीः प्रत्यभिज्ञा च न मृषा प्रत्युत तदेवेदं जलमिति सावधारणैव मृषा । एवं मृषाऽऽ-युषां सोऽयमिति निरवधारणप्रत्यभिज्ञामंगीकृत्य व्यवहर्तृत्वाद्वृथाऽऽयुषां नृणां सोऽयमेव पुमान्देह इति गीर्धीः प्रत्यभिज्ञा च सा मृषा सा च सोऽयमिति निरवधारणा सा न मृषेत्यर्थः । सावधारणनिरवधारणप्रत्यभिज्ञयोर्भ्रमत्वाभ्रमत्वे कुत इत्यतः प्रमाणेनैव

तद्विवृणोति ॥ स चायमिति । तत्र हेतुर्भेदाभेदाविति । तनोर्देहस्य निरवधारणप्रत्यभिज्ञा भेदाभेदविरोधिनी सावधारणा च तद्विरोधिनी यत इत्यर्थः । ननु तर्हि जीवोऽपि स एवाय जीव इति सावधारणप्रत्यभिज्ञा भ्रमः किं नेत्याह ॥ अभेद एवेति । न तु भेदो येन भ्रांतत्वं स्यादिति भावः । प्रत्येकशोऽवयवैः पृथगेकास्मिन् जीवे पृथक् प्रत्येक स्वतः स्वरूपतः । भेदाभेद-स्थलान्याह ॥ कार्येति । निमित्तं कारणं विनेति द्रष्टव्य । चिद्रूपेषु जीवेषु । जडे भेदाभेदावित्यस्यापवादमाह ॥ य इति । तस्मिन्सत्यप्यसत्वरूपखंडितत्वशून्यादित्यर्थः । यथा गोः स्नानादयोऽवियोगिनस्तस्मिन्सत्यप्यसत्वरूपखंडितत्ववंतो ये क्रियादयस्ते भिन्नाभिन्नाः ॥ ४४ ॥ ननु देहस्यैव विकारश्चेज्जीवो जातो मृत इति प्रतीतिः स्वव्यवहारो वा कथमत्राह ॥ आद्य इति । आद्योऽमर उत्पत्तिमरणशून्यः स पुमान् जीवः स्वकृतकर्मरूपबीजेन कारणेन जायते म्रियते चेति भ्रांतिः । भ्रांत्यैव च व्यवहार इत्यर्थः । वस्तुतो देहसंबधेनैव जायते म्रियते चेति पूरणीय । तत्र दृष्टांतः । दारुसंयुतो दारुसंबंधश्चेदग्निर्जातस्तदभावे विनष्ट इति व्यवहारस्तद्वदित्यर्थः ॥ ४५ ॥ वयोऽवस्थादय इत्युक्तं कास्ता अवस्था इत्यत आह ॥ निषेकेति । योनौ रेतःसेक इत्यर्थः । जीवस्य रेतोंऽतर्गतत्वात्तन्निषेको जीवस्यावस्थेति द्रष्टव्यं मध्यं वयः ॥ ४६ ॥ अन्यस्य लोकविलक्षणस्य हरेर्यो मनोरथ इच्छा तन्मयास्तन्निर्मिताः सत्त्वादिगुणसंगादुच्चावचाः सत्त्वसंगादुच्चास्तदितरगुणसंबधादवचाः । क्वचिद्देशे काले च ॥ ४७ ॥ देहस्य भवाप्ययौ साधयति ॥ आत्मन इति । आत्मना देहस्य भवाप्यययावात्मनः स्वस्यानुमेयौ । तथा हि । स्वदेहान्स्वपुत्रदेहो जायत इति स्वेन दृष्टमस्ति तद्वत् । अस्याऽपि पुत्रदेहत्वान्मदीयो देहोऽपि मत्पितृदेहेन जायते । मद्देहजनको मत्पितृदेहस्तावद्विनष्ट एवं ममापि पितृत्वान्मद्देहोऽपि विनष्टो भविष्यतीत्यनुमेयौ । तदयं प्रयोगः । मदीयो देह उत्पत्तिमान्पुत्रदेहत्वान्मत्पुत्रदेहवत् । मदीयो देहो विनाशवान्पितृदेहत्वात्पितृदेहवदिति । नन्वेवं देहस्यैवोत्पत्तिविनाशेऽहं जातोऽहं मृत इति चेतने तद्विषयकव्यवहारस्य का गतिरिति चेन्न । देहे जाते मृते च सति तत्रात्यंतमभिमानसद्भावादेवाहं जात इत्यादिव्यपदेशो न तु वास्तव इत्याह ॥ भवाप्ययाविति । । अत्राभिज्ञाद्वयलक्षणावित्यस्यान्यथाप्रतीतिनिरासायानूद्यार्थमाह ॥ अभिज्ञेति । न वास्तवाविति मात्र शब्दार्थः । तथा च वस्तूनां जीवानां यौ भवाप्ययौ तावभिज्ञाद्वयलक्षणौ । अभिज्ञाऽभिमानः । अज्ञानमिति यावत् । अहं जातोऽहं मत

इति यदभिमानद्वयं भ्रमरूपं। ज्ञानमिति यावत्। तन्निमित्तकावेव न जीवस्वरूपे वास्तवौ स्त इत्यर्थः ॥ ४८ ॥ एतावता प्रबंधेनात्मानात्मनोर्वैलक्षण्यमुपपाद्यैवं वेत्तुः फलमाह ॥ तरोरिति। एतत् श्लोकतात्पर्यमाह ॥ तरोरिति । उत्तरत्र प्रकृतेरेत्रमात्मानमित्युत्तरत्र प्रकृतिपुरुषाज्ञानेऽनर्थोक्तेः पूर्वं तद्विवेकज्ञानस्य मोक्षसाधनतयाऽवश्यं वान्यत्वान्मूलेऽभिप्रेत प्रयाति ॥ परमात्मन इति । प्रकृत्यादेर्भेदं । मूलयोजनां प्रमाणेन दर्शयति ॥ बीजेति। आदि पदेन विकारग्रहणं। द्रष्टा वृक्षजीवः। विकारिणो देहात् ॥ ततश्चेत्थं मूलयोजना ॥ अत्र यथेति शेषः। तरोर्वृक्षस्य यौ बीजविकारौ ताभ्यां दृष्टांतभूताभ्यां । तद्दृष्टांतेनेति यावत्। ततश्च तरोर्वृक्षाद्विलक्षणो वृक्षशरीराधिष्ठितो जीवस्तत्प्रेरको भगवांश्च द्रष्टा ज्ञायते। कुतः। यथा तरोरादौ बीजत्वावस्था वर्तते। उत्पत्त्यनंतरं शाखादिना विकारित्वाद्यवस्था भवत्येवमवस्थाद्वयानुभाविना तद्वदधिष्ठातृतया तदंतस्थोऽवस्थाद्वययुक्तवृक्षशरीरानुस्यूतो जीवस्तत्प्रेरको हरिश्चास्ति। अस्य यदैकां शाखां जीवो जहात्यथ सा शुष्यतीत्युक्तेः। एवं तनोः शरीरात्पृथग्विलक्षणो द्रष्टा शरीरादिज्ञाता जीवस्तत्प्रेरको हरिश्चास्तीति शरीरादिवैलक्षण्यं। उपलक्षणमेतत्। प्रकृत्यादिवैलक्षण्य च। यो विद्वान् जानाति स देहाभिमानं त्यक्त्वा सम्यं मोक्षं याति प्राप्नोतीति ॥ ४९ ॥ एवमज्ञानेऽनर्थमाह ॥ प्रकृतेरिति। आत्मानं जीवं हरिं च प्रकृतेः सकाशात्तत्त्वेन याथार्थ्येनाविविच्य विवेकज्ञानशून्यतया स्थितो योऽबुधः स्पृश्यंत इति स्पृशा विषयास्तैः समूढः संसारं प्रतिपद्यते ॥ ५० ॥ संसारोऽपि न सर्वेषामेकप्रकार इत्याशयेनाह ॥ सत्त्वेति। सत्त्वगुणसंबंधाद्दपीन्देवानित्यादि। ऋष्यादित्वमित्यर्थः। कर्मभिर्भ्रामितो याति ॥ ५१ ॥ अयं संसारोऽभिमाननिमित्त एव न स्वाभाविकमित्याशयेनाह ॥ नृत्यत इति। नृत्यतो गायतः पुरुषाननुकरोति स्वयमपि तथा नर्तनादि करोति । एवमनीहोऽपि दुःखाद्यनुभवायोग्योऽपि सुखादिस्वरूपत्वाद्बुद्धिगुणान्दुःखादीन्पश्यन्स्वनिष्ठतया जानन् जीवोऽहं दुःखीत्यादिरूपेणानुकार्यते भगवतेत्यर्थः । अनीह इति दुःखाद्यनुभवायोग्यत्वं सूचित तत् प्रमाणेन विविच्य दर्शयति ॥ दुःखेति। जीवस्य सज्जीवस्य गुणाः ॥ जीवबुद्धीति। जीवबुद्ध्योरित्यर्थः। विपर्ययेण दुःखाद्या जीवगुणाः सुखाद्या बुद्धिगुणा इत्यर्थः । तथा चानीहः सुखाद्यनुभवायोग्योऽपि बुद्धिगुणासुखादीन्स्वनिष्ठतया पश्यन्ननुकार्यत इत्यपि योज्य। ननु मूले बुद्धिगुणानिति कथं । अह दुःखी सुखीत्यादिप्रत्ययबलेन

जीवनिष्ठताया एवावगतेरित्यत आह ॥ आत्मनोऽपीति । यद्यपि सुखाद्या आत्मस्वामिकत्वेनात्मनो गुणा बुद्धिकृतत्वेन बुद्ध्युपादानकत्वेन बुद्धिगुणा इत्युच्यंते । मूले वस्तुतो बुद्धिगुणा न भवंतीत्यर्थः । ननु बुद्धिकृतानां गुणानां बुद्धिनिष्ठताया एव योग्यत्वेनात्मस्वामिकतया कथमात्मगुणत्वमित्यतो दृष्टांतमाह ॥ परमात्मेति । सुख दुःखं भवो भाव इत्यादिना परमात्मकृततयाऽवगता अपि सुखाद्या जीवगता इत्युच्यंते । यथा तथा बुद्धिकृता अपि आत्मस्वामिकत्वादात्मगुणा इत्याशयः । तथा च बुद्धिकृतानित्यस्य बुद्धिकृततया बुद्धिगुणानित्युक्त भवति ॥ ५२ ॥ पुनर्दुःखादिसंसारस्य मृषात्वमनेकदृष्टांतैराह ॥ यथेत्यादिना । तरवोंऽभोरूपोपाध्युपादानका बाह्यतरुप्रतिबिंबभूता जलांतस्थास्तरवः प्रचलतांऽभसोपाधिभूतांभसः प्रचलने तदुपादेयतरोरपि चलनं दृश्यते ॥ ५३ ॥ मनोरथधियो मनोरथबाह्यपदार्थाभेदबुद्धिमतः । स्वप्नदृष्टो जाग्रत्पदार्थाभेदेन प्रतीयमानविषयानुभवः । संसारो दुःखादिः । अत्र मृषेति चतुर्णामपि दृष्टांतानां मिथ्यात्वमुच्यतेऽतः सिद्धांतविरुद्धं । दार्ष्टांतिके दुःखादेः संसारस्य सत्वात् । तथा च त्रयाणां दृष्टांतानां मिथ्यात्वेऽप्याद्यदृष्टांते बिंबप्रतिबिंबभावसद्भावेन प्रतिबिंबे उपाधिकृतचलनादेः सत्वादित्यतः सर्वदृष्टांतदार्ष्टांतिके साधारण्याय मृषा शब्दार्थमाह ॥ मृषेति । ननु दृष्टांतेषु मृषात्वं नाम वृथात्वं संभवति । निष्प्रयोजनत्वसद्भावात् । दार्ष्टांतिके कथमीषत्सुखादिप्रयोजनसद्भावादित्यतो विद्यमानमपि प्रयोजनमल्पमिति कृत्वा निष्प्रयोजनत्वमेवेत्याशयवान्प्रमाणमाह ॥ अल्पेति । यदल्पप्रयोजनं तन्मृषेत्येवोच्यत इत्यन्वयः । अस्तु मृषा शब्दो मिथ्यार्थक एव तर्ह्याद्यदृष्टांतायोगः । प्रचलतांऽभसा तरवोऽपि बहिस्थिता बिंबभूताश्चला इव दृश्यंत इति योज्यं । इदं तु ज्ञानं भ्रमरूपमेव बिंबे तद्दर्शनस्य मिथ्यात्वात् । तर्हि कथं प्रकृते योजनीयमित्यत आह ॥ आत्मन इति । तथा संसार आत्मन इत्यस्य सुखादिरूप आत्मा वस्तुतो भवति । तस्य सुखादिवद्दुःखाद्या अपि स्वतः स्वाभाविका इति बुद्धिर्मृषा मिथ्या भ्रमरूपेत्यर्थः ॥ ५४ ॥ नन्वेवं संसारस्यास्वाभाविकत्वे स्वत एव निवृत्तिसंभवात् तदर्थं ज्ञानादिसंपादनवैयर्थ्यमित्यतः स्वत एव न निवर्तत इत्याह ॥ अथ इति । सर्वदा विषयान्ध्यायतोऽस्य जीवस्य तैर्विपर्ययार्थे प्रजाजनेऽविद्यमानेऽपि तत्प्रवाहरूपेणोत्पत्त्या संसृतिर्न निवर्तेत । यथा जागृद्दृष्टपदार्थानुभवजनितसंस्कारेण स्वप्नेऽनर्थप्रवाहानामागमः प्राप्तिस्तद्वदित्यर्थः ॥ ५५ ॥ अपसंहरति ॥ तस्मादिति । तस्मात्

श्री० २०४

द्रियैरमगलैरिंद्रियैर्वैकाल्पिक । स्वार्थे क प्रत्ययः । विकल्प एव वैकाल्पिकं । विरुद्धकल्पनाख्य भ्रम । आत्मना भगवताऽनुग्रहेणैवाज्ञानेन निष्पन्नं जनित पश्येदित्यर्थः ॥ ५६ ॥ उत्तरग्रंथांपक्षेपायाह ॥ क्षिप्त इत्यादिना । क्षिप्तो निरसितः । वृत्त्या जीवनोपायेन । विष्ठितो विष्ठासंबंधं प्रापितः । प्रकंपितो भय । प्रापितोऽपीति शेषः । कृच्छ्रगतः कृच्छ्राणि प्राप्त आत्मना मनसाऽऽत्मान जीवं संसारादुद्धरेत ॥ ५७ ॥ ५८ ॥ क्षिप्त इत्यादिक श्रुत्वोद्धवश्चोदयति ॥ यथेति । कथमित्यर्थः । एवं त्वदुक्तप्रकारेण परोक्तं निष्ठुरादिताडनादि दुःसहमिति । आत्मनि स्वस्मिन्नसाधुभिः कृतमतिक्रममवज्ञानं सुदुःसहं समाधातुमशक्यं मन्ये तत्सहनप्रकारं वदेत्यर्थः । विदुषामपि दुःसहं किमु । अज्ञाना दुःसहत्वहेतुः प्रकृतिर्हीति । अहं ममेत्यभिमानस्वभावो बलिष्ठा यस्मात् । तस्मादिति शेषः । एतादृशैरेव सुदुःसह इत्याशयेनाह ॥ अन्यत्र त्वच्चरणाल्यास्त्वच्चरणैकशरणानंतेऽन्येषां सुदुःसहं मन्य इत्यन्वयः ॥ ५९ ॥ ६० ॥ इति श्रीभागवतटिप्पण्यां द्वाविंशोऽध्यायः ॥ ११ २२ ॥ ॥

॥ हरिः ॐ ॥ आशंसितः प्रष्टुरभीष्टकथनायाकांक्षा कारितः । पृष्ट इति यावत् । भृत्यस्योद्धवस्य वचः सभाजयन्नपूजयन् ॥ १ ॥ अत्र जीवराशौ यो बाह्यांतर्भंजनो बाह्यांतः शत्रुशोषकरः । स एव दुर्जनैर्निर्दुरुक्तैर्भिन्नं व्यथितमात्मानं मनः समाधातुमीश्वरः समर्थः ॥ २ ॥ नन्वादौ दुरुक्तिभिर्मनोभेदः कुत इत्यत आह ॥ न तथेति । तुदंति व्यथयंति पुरुषपर्वा निष्ठुरोक्तिलक्षणशराः ॥३॥ इतिहासं पुरावृत्तं । इह दुरुक्तिभिन्नमनःसमाधानविषये निबोध जानीहि ॥४॥ भिक्षुणा संन्यासिना । धृत्या धैर्येण युक्तेन । निजकर्मणां विपाक फलमेतदिति स्मरता भिक्षुणा गीतमित्यन्वयः ॥ ५ ॥ अवंतिषु तन्नामकदेशेषु । वार्ता वृत्तिः कुसीदादिना जीवनोपायवान् ॥ ६ ॥ अतिथ्यादिपूजाभावादावसथस्य शून्यत्व । काले भोजनादिकाले । कामै रशनादिकाम्यैः ॥ ७ ॥ तस्य लुब्धता दृष्ट्वा विषण्णाः ॥ ८ ॥ यक्षवित्तस्य यथा यक्षाधिष्ठितं वित्तं यक्षस्य भोग्यं न भवति नापीतरस्य तद्वद्यक्षस्य वित्तमिव वित्तं यस्यासौ तथोक्तः । पंचभागिनः पंचमहायज्ञभोक्तारः । देवर्षिपित्राद्या वक्ष्यमाणा देवाद्याः ॥ ९ ॥ यद्द्रव्यसंपादकं पुण्य स्थितमभूत्तदाख्यः स्कंधो वृक्षस्तेषां देवानामवध्यानेनावज्ञानेन विस्रस्तो नष्ट इत्यर्थः । भूरि उद्धव । बहुनाऽऽयासेन परिष्कृतः संपादितः ॥ १० ॥ निधनप्रकारमेवाह ॥ ज्ञातय इत्यादि । व्यवहारेण । तं गृहीत्वेति शेषः । ब्रह्म-

बधुर्द्विजाधमस्तस्मान्न पार्थिवान्नरराजात्तस्मिन्काले कश्चिद्ब्राह्मणाभास एव मनुष्याणां राजा जातोऽभूत्तस्मादित्यर्थः । दैवत इत्यादि-निधनमगच्छदित्यनेनान्वयः ॥ ११ ॥ १२ ॥ दीर्घं यथा स्यात्तथा ध्यायतः । नष्टरायो नष्टद्रव्यस्य । राः रायौ रायः इति रै शब्दस्येयं षष्ठी । ध्यायतश्चिंतयतः । तपस्विनः । तपसं ताप इति धातोः । सतापवत इत्यर्थः । निर्वेदो वैराग्यं ॥ १३ ॥ आत्मा देहो यस्य ममेदृशोऽर्थायासेन धर्मायेत्यादि । कामाय विषयभोगाय ॥ १४ ॥ १५ ॥ यच्छुद्धं यशः श्लाघयितुं योग्याः श्लाघ्या ये गुणास्तान्स्वल्पोऽपि लोभ हंति । ईप्सितमिष्टरूपं । श्वित्रः श्वेतकुष्टं यथा हंति तथा ॥ ॥ १६ ॥ आत्मोपतापायेत्युक्तं विशदयति ॥ अर्थस्येति । सिद्ध इत्यादावप्यर्थस्येतत्संबध्यते । नाशोपभोगे नाशसहिते उपभोगे । नाशे उपभोगे चेत्यर्थः । अर्थस्य साधने आयासः । सिद्धे उत्कर्षे । अर्थे सिद्धे सत्यर्थस्योत्कर्षेऽभिवृद्धौ चिंता । तस्यार्थस्य रक्षणे त्रासः । केनचिद्दृष्टं चेत्स नेष्यतीति भीतिः । अर्थस्य व्यये चिंता । नाशे उपभोगे च धनपिशाचावेशेन भ्रमो बुद्धिभ्रंशः ॥ १७ ॥ १८ ॥ अर्थो मूलं येषां तेऽर्थमूलाः । अर्थमूलका इत्यर्थः । अर्थाख्यमनर्थं तद्रूपमनर्थसाधनं ॥ १९ ॥ भिद्यंते विदार्यते । प्रतिकूला भवंतीति यावत् । किं बहुना प्राणिमात्रप्रतिपक्षी भवतीत्यर्थः । एकयेति ॥ २० ॥ २१ ॥ अमरैर्देवैः प्रार्थ्यं तत्र मनुष्येष्वपि द्विजाग्र्यतां । स्वयेत्याद्यमरप्रार्थ्यत्वे हेतुः । तन्मानुष्यं प्रार्थ्य मोक्षादिपुरुषार्थं घ्नंति नाशयति ते यांति ॥ २२ ॥ लोक देहं । धामानि धाम्नि गृहे ॥ २३ ॥ ज्ञातिरूपबंधून् भागिनो भागार्हाननुद्दिश्य वित्तमसंविभज्यात्मानं स्वात्मानमधः पतति पातयति ॥ २४ ॥ ननु कथमधः पातहेतुत्वं वित्तस्य यतो मोक्षसाधनं भविष्यति । तुष्टेऽर्थेन गुरुर्यस्मात्कैवल्यं दातुमप्यलमिति चेत । सत्य । अप्रमत्तविषय तदित्याशयेनाह ॥ व्यर्थयेति । अर्थेहया प्रमत्तस्य वित्ताद्याः कुशलाय मोक्षादिपुरुषार्थाय मनासि सिद्ध्यंति न क्षमाः । ननु प्रमत्तावस्थायां गतायां वार्धक्ये मोक्षं साधयिष्यतीति चेत्तत्राह ॥ जरया इति । जरया संगतः किं साधयत् । न किमपि ॥ २५ ॥ कस्यचिल्लोकविलक्षणस्य वस्तुनः ॥ २६ ॥ धनर्दैः कामर्दैर्मनुष्यैः । जन्मदैः कर्माभिः किमिति वर्तते । दैवमयो दैवताप्रधानः ॥ २७ ॥ दशमावस्थां । आत्मनो मम संसारसमुद्रतरणे प्लवभूतो निर्वेदश्च जात इत्यर्थः ॥ २८ ॥ कालविशेषणावशिष्टकालेन । शोषयिष्ये इंद्रियनिग्रहं करिष्ये । कुत इत्यत आह ॥ [illegible] इति । यद्यहम

खिलार्थेष्वप्रमत्तः स्यां तर्ह्यात्मनि हरौ सिद्धः स्यां तद्विषयकसिद्धिमान्स्यामित्यर्थः ॥२९॥ अनुमोदेरन् अनुकूला भवन्त्वित्यर्थः । नन्वायुषोऽल्पस्यैवावशिष्टत्वात्तावदायुषा किं साधयसीति चेत्तत्राह ॥ मुहूर्तेनेति ॥ ३० ॥ हृदयग्रंथिमंतःकरणाध्यवबंधं । भिक्षुः संन्यासी ॥ ३१ ॥ ३२ ॥ प्रवयसं जरठं । पर्यभवन्परिभवमकुर्वन् । परिभूतिभिस्तिरस्कारैः ॥३३॥ तदेवाह ॥ केचिदित्यादिना । त्रिवेणुं त्रयो वेणवो ग्रंथयो यस्य दंडकाष्ठस्य तं । चीराणि जीर्णवस्त्राणि ॥ ३४ ॥ दर्शितानि प्रदाय पुनराददुः । मदीयानि वस्त्राणि केन नीतानीति भिक्षुणोक्ते मया नीतानि तानि ग्रहाणेति तानि प्रदर्श्य तद्धस्ते दत्वा पुनस्तद्धस्ताद्बलाज्जगृहुरिति भावः ॥ ३५ ॥ वाचयंति वचनयुक्तं कुर्वंति ॥ ३६ ॥ ३७ ॥ धर्मध्वजः कपटधर्मवान् ॥ ३८ ॥ ३९ ॥ दौर्वादयंति दुर्वचनयुक्तं कारयंति । क्रीडनकं क्रीडासाधनकं द्विजं पक्षिणं ॥ ४० ॥ प्राप्तं दुःखं दिष्टं दैवाद्दुरदृष्टाल्लब्धमवश्यं भोक्तव्यमेवेत्यबुध्यत ॥ ४१ ॥ योगमार्गादधः पातयद्भिर्नराधमैः परिभूतः परिभवं प्राप्तः सात्त्विकीं स्वाभाविकीं धृतिं धैर्यमास्थाय स्वधर्मस्थो भिक्षुरिमां गाथां वक्ष्यमाणमगायतेत्यर्थः ॥ ४२ ॥ कीदृशीं गाथामगायतेति तत्राह ॥ नायमित्यादिना । अयं परितो वर्तमानो जनो लोकानां देहो जीवयुक्तो लोकदेहः सुखदुःखयोर्हेतुर्न भवति । यथा देवता देवा आत्मा जीवः । ग्रहा आदित्यादिनवग्रहाः । एते सुखदुःखहेतवो न भवंति । मनस्तत्प्रधानकलिंगदेह इत्यर्थः । परं केवल । अभिमानग्रस्तमन एव कारण सुखदुःखयोरित्यामनंति । मनो विशिनष्टि ॥ यन्मन' ससारचक्र परिवर्तयेदिति । प्रतिज्ञाश्लोकोऽयं उत्तरत्र स्थिताः सर्वेऽपि एतद्विवरणात्मकाः ॥४३॥ तत्र संसारहेतुभूतं मन एव सुखदुःखयोर्मुख्य कारणमित्येतद्विवृणोति ॥ मन इत्यादिना । मन आदौ स्थूलदेहे गुणान्समीचीनकामक्रोधादीन्सृजते । ततः समीचीनकामादिगुणयुक्तं मनो विलक्षणानि विलक्षणकर्माणि सृजते । विलक्षणानीत्युक्तमेव दर्शयति ॥ शुक्लानीति । शुक्लानि सात्त्विकानि कृष्णानि तामसानि लोहितानि राजसानि । तेभ्यः कर्मभ्यः सवर्णाः सदृशीर्गतयः सुखादिफलानि भवंति । अनेन सुखदुःखादीनां मनः कारणमित्यवगतं ॥ ४४ ॥ तदेवोपपादयति ॥ अनीह इति । स्वरूपतो निषिद्धचेष्टाशून्यत्वादनीहः । आत्मा जीवो मनसा मनोऽभिमानेन कर्माणि समीहते करोति । नन्वेवं मन एव कारणं चेद्भगवता किं कृत्यमिति न मंतव्यमित्याह । अनीहः स्वयं तादृक्कर्मकरणशून्यः । हिरण्मयो हिरक् सर्वविलक्षणं यत् णं सुखं तन्मयत्वा-

द्धिरण्मयो मत्सखो मम मित्रभूत आत्मा परमात्मा तानि कर्माणि साक्षीभूतः सन् चष्टे पश्यति । फलदानायेति शेषः । कर्माणि समीहत इत्युक्तं किमत इत्यत आह ॥ मन इति । मन आदि षोडशकलात्मकं स्वलिंगं लिंगशरीरं परिगृह्य स्थितस्तद्युक्त इत्यर्थः । असौ जीवो गुणेषु विषयेषु संगतः स्नेहतः कामान्विषयान् जुषन्सेवमानो नितरां बद्धो भवतीत्यर्थः ॥ ४५ ॥ एवं संसारहेतुत्वान्मनसस्तन्निग्रहोऽवश्यं कर्तव्य इत्याशयेनाह ॥ दानमिति । दानादयः सर्वे मनोनिग्रहलक्षणांताः । लक्षणेत्यनंतर योग पदाध्याहारः । अतः परं मनोनिग्रहरूपयोग एवांतर्येषां ते तथा । मनोनिग्रहफलका इत्यर्थः । अतो मनसः समाधिर्विषयेभ्यो निगृह्य भवति समाधानमेव परो योग इत्यर्थः ॥ ४६ ॥ मनःसमाधानस्य परमयोगत्वमुपपादयति ॥ समाहितमिति । यस्य पुंसः मनो विषयेभ्यः प्रशांतं भवति समाहितं भवति तस्य पुंसो दानादिभिः कृत्यं प्रयोजनं किमस्ति । अस्ति चेन्मां प्रति वद । तथा च फलस्य जातत्वाद्दानादेर्वैयर्थ्यमिति भावः ॥ ४७ ॥ कृतैरपि दानादिभिर्यस्य मनोऽसंयतमनिगृहीतं सदेव चेद्यदि विनश्येत् । विषयेष्वेव गच्छेदिति यावत् । तर्ह्येभिर्दानादिभिरपरं साध्यं किमस्ति न किमपि । दानादिभिर्यत्साधनीय तस्यैव जातत्वाद्दानादेर्वैयर्थ्यमिति भावः ॥ ४७ ॥ पुनः मनःप्राबल्यमुपपादयति ॥ मन इति । अन्ये देवा इंद्राद्याः सर्वे मनोवशे भवंति । तन्मनोऽन्यस्य कस्यापि वशं वशत्व न समेति । ननु को मनो यस्यैतादृशी शक्तिरुपपन्नेत्यतोऽत्र सर्वत्र मनः शब्देन रुद्रो ग्राह्य इत्याह ॥ भीमो हीति । सहसो वायोः सकाशात् । तदनुग्रहेणेति यावत् । देवस्य भर्गः सहसो यतो जनीति श्रुतौ सह शब्दस्य वायौ प्रयोगदर्शनात् । सहीयान् सहनशक्तिमान् भीमः । व्योमकेशो भवो भीम इत्यभिधानात् । रुद्रो हि मनोदेवोऽतस्तन्मनसस्तदभिमानिनं रुद्रं कोऽपि नात्यातिशदातिक्रांतवान् । अतः स हि देवदेव इत्यर्थः ॥ ४८ ॥ अत्र जीवराशौ केचिद्विमूढास्तमसह्यवेगमरुंतुदं । तुद व्यथने । क्षतनिहितलवणवद्व्यथाकरं । उदासीनरिपु दुर्जनं शत्रुं न विजित्याविजित्य । मित्रैर्मित्रभूतैर्मर्त्यैरसद्विग्रहममंगलभूतं वैरं कुर्वंति । तथा च शत्रुमविजित्वा मित्रकलहस्य परिहासास्पदत्वान्मया च शत्रुमविजित्य मित्रैः कलहः कृत इति परिहासास्पदो जातोऽस्मीत्याशयः । नन्वत्रादौ भीमो हीति मनसो देवत्वमुक्त्वा तं दुर्जयं शत्रुमिति तस्य शत्रुत्वमुच्यते । तदनुपपन्नं । देवस्य सर्वोपकारकत्वेन सुहृत्वाच्छत्रुत्वमयुक्तमित्यतो विवक्षाभेदमाह तात्पर्यकारः ॥ गात्रिकर्ति ।

तामसेत्युपलक्षणं । राजसेत्यपि द्रष्टव्यं । राजसतामसमनोविवक्षयेत्यर्थः । मनो हि सात्त्विकादिभेदेन त्रिविधं । तत्र सात्त्विकमनोऽभिमानी रुद्रदेवस्तदपेक्षया पूर्वश्लोके देवशब्दो राजसतामसमनोऽभिमानी कालनेम्यादिप्रसिद्धस्तदपेक्षया द्वितीयश्लोके शत्रु शब्द इत्यदोष इति भावः । ननु वृश्चिकभयात्पलायमानस्याशीविषमुखे निपातो देवत्वशत्रुत्वोपपादनायैवं विवक्षाभेदे उत्तरश्लोके तं दुर्जयमिति तच्छब्दप्रयोगो विरुद्ध्येत । तस्य पूर्वप्रकृतपरामर्शकत्वात् । तथा च पूर्वोक्तदोषतादवस्थ्यमित्यतो भिन्नविषयत्वेऽपि युक्तः परामर्श इत्यत्र नियामकं प्रमाणमाह ॥ एकेति । भिन्नानामपि पदार्थानामभेदेन परामर्श एकस्थानाधिपत्ये सति युज्यते । वस्तुनोः सादृश्येनापि युज्यत इत्यर्थः । एव च प्रकृते सात्त्विकतामसमनोभिमानिनोर्भेदेऽप्येकस्थानाधिपत्यरूपनिमित्ताभावेऽपि तमिति परामर्शोऽभेदेन युज्यते । रुद्रकालनेम्योरभिमानित्वेन सादृश्यसद्भावात् । तथा च तं तत्सदृशमभिमानित्वेन रुद्रदेवसदृशं कालनेम्याख्यतामसमनोरूपं शत्रुमित्यर्थ उक्तो भवति । ननु मनश्च नान्यस्य वशं समेतीति मनोभिमानी रुद्रः कस्यापि वशो नेत्युच्यते । तदनुपपन्नं । सरस्वत्याधीनत्वात्तस्येत्यतः प्रमाणेन तात्पर्यमाह ॥ ऋत इति । द्वे ब्रह्मणी कार्याकार्ये चतुर्मुखपरब्रह्मणीत्यर्थः । श्रियं सरस्वतीं चापि मनस्तदभिमानी रुद्रः कस्य वशं वशत्वं याति न कस्यापीत्यर्थः । ननु तथात्वे मनोवशीकरणायोगादिंद्रादेर्मोक्षो न स्यादित्यत आह ॥ याति वेति । वशमिति वर्तते । रुद्रो यस्योपरि प्रसन्नो भवति तद्वशं मन इत्युच्यत इत्यर्थः । तथा च मनो ब्रह्मश्रीचतुर्मुखसरस्वतीविनाऽन्यस्येंद्रादेर्वश वशत्वं न समेतीत्यर्थ उक्तो भवति । ननु तथाऽप्युदासीनं रिपुमित्युक्तं । उदासीनश्चासौ रिपुश्चेति हि तदर्थः । रिपुत्वं हेयत्वं । तथा चोदासीनत्वे न रिपुत्वं । रिपुत्वे च नोदासीनत्वं । उदासीनत्वे सति रिपुश्चाप्रसिद्धोऽतः कथमेतदित्यतः षष्ठीविग्रहोऽत्र कार्य इत्याह ॥ उदासीनानामिति । मनोनिग्रहे ये उदासीनास्तेषां संसारादिदुःखापादकत्वात्तान्प्रति रिपुमित्यर्थः । उदासीनानां रिपुत्वोक्त्या लब्धमर्थं दर्शयति ॥ सम्यगिति । मनोनिग्रहे सम्यग्यत्नं कुर्वतां । कर्मणि षष्ठी । सम्यग्यत्नं कुर्वतः प्रति मनसो रिपुत्वं न शक्यत इत्यर्थः ॥ ४९ ॥ मनस एव पुनः कारणत्वमुपपादयति ॥ देहमिति । अत्र मनोमात्र शब्दं व्याचष्टे ॥ अभिमानेति । जीवस्य देहेन सबंधोऽभिमानमात्रेणैव भवतीत्यर्थः । तथा च मात्र शब्दः केवलार्थ इत्युक्तं भवति । तथा च मनोमात्रं केवलमनोऽभिमाननिर्मितमित्यर्थ उक्तो भवति। यद्वा ।

मात्र शब्दो निर्माणार्थक इत्याह ॥ मनसेति । तथा च मनोमात्रं मनसा निर्माणमस्येति तथोक्तमित्यर्थ उक्तो भवति । मात्र शब्दस्य व्याख्यानमेव पृथक् पक्षद्वयेऽप्यर्थस्त्वेक एवेति ज्ञेयं । एषोऽहमित्यादेर्भ्रमत्वमुपपादयति ॥ एष इत्यादि । स एषः परिदृश्यमानो मद्देह एवाहं नैतद्देहातिरिक्तो जीवोऽस्ति । तथाऽन्यो मद्देहाभिन्नः परिदृश्यमान एव देहोऽयं जीव इति देहमात्रं केवलं देहमेव जीवं मन्यते न तदतिरिक्तमित्यर्थः । श्लोकार्थे प्रमाणमाह ॥ देहेति । स्वदेहं परदेहं चेत्यर्थः । स्वात्मानं वस्तुतस्तदंतरहमस्मीत्यज्ञात्वा देह एवाहमिति पश्यति । तथा च देहमात्रं परदेहं परमात्मानं परजीवाभिन्नं पश्यतीत्यर्थः । दुरंतपार इत्यादेस्तात्पर्यं ॥ अथ इत्यादि ॥ ततश्चायं श्लोकार्थः ॥ मनोमात्रं केवलमनोऽभिमाननिर्मितमिमं देहं गृहीत्वा ममेदमहं कर्तेत्यंधधियो मनुष्या एष देह एवाहमन्यो देह एवायमिति भ्रमेण दुरंतपारे तमसि पतंति । तद्दुःखेन भ्रमंति मूर्छिता भवंतीति ॥ ५० ॥ एवं मनः परं कारणमित्यर्थोक्तमुपपाद्य नायं जनो म इत्यादिकं प्रतिज्ञातमुपपादयितुमादौ जनस्य सुखहेतुत्वं नास्तीति प्रतिज्ञातमुपपादयति ॥ जन इति । अत्र जन शब्देन देहो विवक्षित इत्यभिमेत्य तस्य देहवाचित्वेऽभिधानमाह ॥ जन शब्द इति ॥ ५१ ॥ यदंगमंगेनेत्यत्र देवतोपरि कोपो न क्रियत इत्युच्यते । तदयुक्तं । देवतोपर्यपि कोपकर्तॄणां दर्शनादित्यतस्तत्र निमित्तमाह ॥ अयोग्येति । क्रोधकरणेऽयोग्याः । कोपानास्पदा इति यावत् । तद्विषयकक्रोधादेरभिमानयुक्तं । मन एव कारणं । तादृशं च मनो मम नास्तीति न मम तेषु क्रोध इति भावः । विकारयोस्तादित्यत्र विकार शब्देन तावद्देवता ग्राह्यस्तत्प्रकरणात् देवतानां च कथ विकारशब्दवाच्यत्व विकाराभेदाभावात् । यावद्विकारं त्वित्युक्तरीत्या विकारित्वेनाल्पशक्तित्वप्राप्तेश्चेत्यत आह । अविकाराश्चेति । स्वतः शक्ता अपि अविकाराश्च । अविकारा अपि विकारस्याभिमानित्वादेव विकारा इति शब्दिता इति योज्यं ॥ ५२ ॥ आत्मा यदीति श्लोके न ह्यात्मनोऽन्यादित्येतद्व्याचष्टे ॥ न हीति । स्वभाव इत्येतद्विभक्तिविपरिणामेनानुवर्तत इत्याशयेन स्वभावादित्युक्तं । यदि तन्मृषा स्यादित्येतद्व्याचष्टे ॥ यदि दृश्यत इति । स्वभावादन्यद्दृश्यत इत्यर्थः । मृषात्वमुपपादयितुं प्रवृत्ते न सुखं न दुःखमित्यत्र च सुखमित्यंशं व्याकरोति ॥ सुखरूपमिति । सुखरूपं जीवस्वरूपं दुःखं दुःखरूपं न भवति । उपलक्षणमेतत् । दुःखरूपं जीवस्वरूपं सुखरूपं न भवतीति न दुःखमित्यंशस्यापि व्याख्यान द्रष्टव्य । प्रकृतोपयोगमुपपादयति ॥ अत इति । वस्तुतः

सुखरूपस्य दुःखरूपत्वाभावात्। अभिमानयुक्तं मन एव। तथा सुखिनं दुःखतया स्वसन्निधानेन जीवे दर्शयति ॥ जपाकुसुमं स्वसन्निधानात्स्फटिके लौहित्यमिवातो मम तादृशमनसोऽभावाद्दुःखित्वं कथं प्रतीयेतेत्याशयः। न सुखं न दुःखमित्यत्र प्रमाणमाह ॥ जीवस्येति ॥ ५३ ॥ ग्रहानिमित्तमिति श्लोके ग्रहस्येति षष्ठ्यंतं पदं व्याचष्टे ॥ गृह्यमाणत्वादिति। गृह्यत इति कर्मव्युत्पत्त्येति भावः। कर्मास्त्विति श्लोके तद्धि जडे जडत्व इति पदच्छेदप्रतीतेः कस्येत्यप्रतीतेर्व्याचष्टे ॥ अजडत्व इति। आत्मनः। सिद्धे सतीति शेषः ॥ ५४ ॥ कालोऽस्त्विति श्लोके तदात्मन इत्येतद्व्याचष्टे ॥ तदात्मन इति। कालाधीनस्वरूपस्येत्यर्थः। आत्म शब्दस्य स्वरूपार्थत्वे प्रमाणमाह ॥ स्वातन्त्र्यमिति। नन्वेवं तर्ह्यात्मनः कालाधीनस्वरूपत्वाभावेन दुःखादेरयोगेऽपि देहस्य तद्भावेन दुःखं स्यादेवेत्याशंकापरिहाराय नाग्नेर्हीति दृष्टांतः प्रवृत्त इत्याशयेन विवृणोति ॥ यथेति। अग्नेस्तापनिमित्तं दुःखं न हिमस्य हिमानिमित्तं दुःखं नेति ग्राह्य। एव जडस्य देहस्य जडांतसंबंधे सत्यपि तत्प्रयुक्त दुःखं नेत्याशयः। अत्र प्रमाणमाह ॥ सदेति। यद्यपीति शेषः। युज्यते संभावितमित्यर्थः। न सुखं न दुःखमित्यत्र प्रमाण माह ॥ आत्मन इति। किमेतादृशं मनसः सामर्थ्यमित्यतः प्रवृत्तस्य भीमो हि देव इत्यस्य तात्पर्यं ॥ सर्वेषामिति। अत एव मनोरूपो मनोऽभिमानी। मनोवशेऽन्ये हि भवंति देवा इत्यस्य तात्पर्यं ॥ तद्वशा इति। सहसः सहीयानित्यस्य तात्पर्यं ॥ नियता तस्य च प्राण इति ॥ ५६ ॥ न केनचिदिति श्लोके यथाऽऽत्मन इत्यत्रत्यस्यात्मन इत्यस्यार्थमाह ॥ आत्मन इति। सत इति शेषः। अत्र जनश्च हेतुरित्यादि सर्वश्लोकेषु जनादीनां न सुखदुःखहेतुत्वं किंतु मनोऽभिमानस्यैवेति मनस एव परमकारणत्वमुपपादनीयं। सिंहावलोकनन्यायेन तावज्जन इति श्लोके मनस एव निमित्तमुक्तमस्तीत्याशयेनाह ॥ भौमयोरिति। भूविकारयोरित्यर्थः। अन्नमयं हि सौम्य मनः पृथिवी वा अन्नमिति श्रुतेः। पीडयेत्यादि भावप्रधानो निर्देशः। पीड्यत्वपीडकत्वापादकयोरुभयमनसोरित्यर्थः। पीड्यपुरुषे यदि मनः पीड्यत्वापादकतया वर्तते तदा तस्य दुःखं पीडके च पीडकत्वापादकतया वर्तते चेत्तस्य सुखं भवतीति प्रसिद्धं। मयि स्थितं च मनसो मम पीड्यत्वाभिमानापादकं न भवतीति न मम दुःखहेतुभूतं तदित्याशयः। ग्रहा इति श्लोकेऽपि मनोऽन्वयव्यतिरेकावुक्तावित्याशयेनाह ॥ ग्रहस्येति। गृह्यतेऽनेनेति करणव्युत्पत्त्येत्याशयः। ग्रहण

रूपस्य ग्रहजननस्वभावस्यत्यर्थः । कमास्त्वाति श्लोकेऽपि तदन्वयव्यतिरेकादित्याशयेनाह ॥ जड इति । कालोऽस्त्विति श्लोकेऽपि तावुक्तावित्याशयेनाह ॥ तदात्मन इति । कालकृतविकारयुक्तस्येत्यर्थः । न केनचिदिति श्लोकेऽपि तावुक्तावित्याशयेन यथाऽऽत्मन इत्यादि योजयति ॥ सत्यतिरूपिण इति । अत्रत्यात्म शब्दस्य मनःपरतयाऽऽत्मनो मनस इति व्याख्यातत्वाज्जीवस्येति व्याख्यानांतरमिति ध्येयं । यथेत्यनंतरमात्मनो मनसः सतो द्वंद्वोपरागो भवतीति शेषः । परस्य भगवतः । तत्र मूलाभिप्रेतं हेतुमाह ॥ अमनस्त्वादिति । जीववत्प्राकृतमनोऽभिमानाभावादित्यर्थः । उपसंहरति ॥ अत इति । उक्तरीत्या जन इत्यादि सर्वश्लोकेष्वपि मनोऽन्वयव्यतिरेको दुःखादिजनने उक्त इत्यर्थः ॥ तथा च जन इत्यादिश्लोकानामियमक्षरयोजना ॥ तथा हि । नायं जन इत्यत्र मनस एव परमकारणत्वमुपपादयितुमादौ प्रतिज्ञातं जनस्य सुखदुःखाहेतुत्वमुपपाद्यते ॥ जनोऽस्येति । अस्य जीवस्य जनः परिदृश्यमानप्राणिदेहः सुखदुःखयोर्हेतुश्चेत्तर्हि तत्र देहे निर्मुक्ताभिमानतया विद्यमानस्यात्मनो मम तेन किं स्यान्न किमपि । कुतः । यतस्तद्दुःखं भौमयोर्भूविकारयोर्देहयोस्ताड्यत्वात्ताडकत्वे तदापादकयोरुभयमनसः सतोर्भवति नान्यथा । मयि स्थितं च मनो मम ताड्यत्वाभिमानमुत्पाद्य दुःखहेतुर्न भवति । निर्मुक्ताभिमानत्वादतो मम किं स्यान्न किमपि दुःखादिकमित्यर्थः । अत्र दृष्टांतो जिव्हामिति । स्वदद्भिः स्वकीयदंतैरेव क्वाचित्स्वाजिव्हां संदशति । तदा तद्वेदनायां तस्यां जिव्हायां वेदनायां सत्यां कतमाय कुप्येत्कोपं कुर्यात् । न हि दंतान्प्रति क्रुद्ध्यति । तथा च जिव्हादंतयोरुभयोरपि भौमत्वेनैकस्य पार्थिवपदार्थस्यापरपार्थिवपदार्थेन संबंधन दुःखे जातेऽहं किं करिष्यामीति मत्वा न कुप्यति । यथा तथा पार्थिवपदार्थभूतमदीयदेहस्यापरपार्थिवपदार्थभूतपरकीयदेहेन दुःखे जाते निर्मुक्ताभिमानस्य किं भविष्यतीत्यतो न जनो दुःखहेतुरिति भावः । न देवतेति प्रतिज्ञातं देवताया दुःखहेतुत्वाभावमुपपादयति ॥ दुःखस्येति । यदि दुःखस्य हेतुः परदेहस्थिततत्त्वाभिमानिदेवतेत्युच्यते । तर्हिस्तु तथाऽत्र देहे निर्मुक्ताभिमानतया स्थितस्यात्मनो मम किं स्यान्न किमपि । कुतः । यतस्तद्दुःखं विकारयोर्मन आदिविकाराभिमानिदेवतयोर्मनसोर्विकारापादकतया सतोरेव भवति नान्यथा । मद्देहस्थिता देवताश्च मन्मनसो विकारापादनका न भवंत्यतो न मम दुःखमित्यर्थः । तत्र दृष्टांतो यदंगमिति । यद्यदा स्वदेहेऽङ्गे चक्षुराद्यंगेनेंद्राद्यभिमान्यमानहस्तादिना विहन्यते चेत्तदा पुरुषः कस्मै क्रुध्येत् । न हि हस्ताभि

मानींद्राय कुप्यतीत्यर्थः । कदाचित्कुप्यत्येवेति चेत्तत्क्रोधस्यायोग्येंद्रादिविषयकत्वात् । अयोग्यक्रोधादेश्च मनोऽभिमानस्यैव कारणत्वात्तस्य च ममाभावादित्याशयः । नामेत्युक्तं मनसो दुःखाहेतुत्वमुपपादयति ॥ आत्मेति । आत्मा मनो सुखदुःखहेतुश्चेत्तत्र देहे विद्यमानस्य निर्मुक्ताभिमानस्य मम किं नैव सुखापादकः । कुतः । निजस्वभावः । अन्यतः कारणविशेषादन्यथा नैव भवति । तदेवोपपादयति ॥ न हीति । आत्मनो जीवस्य स्वभावादन्यन्न भवतीति हि प्रसिद्धं । ननु सुखस्वभावस्याप्यात्मनो दुःखादिकं दृश्यत इति चेत्तत्राह ॥ यदीति । यदि स्वभावादन्यद्दृश्यते तर्हि तन्मृषा मिथ्यैव स्यात् । मिथ्यात्वमुपपादयति ॥ न सुखमिति । यत्सुखस्वरूप तद्दुःखं दुःखस्वरूपं न भवति । यद्दुःखं दुःखस्वरूपं तत्सुखं सुखस्वरूपं न भवत्यतः स्वभावादन्यत्परिदृश्यमानं मृषैव शुक्तिरजतवदित्यर्थः । ननु मनस एव कारणत्वमुपपादयितुमयं ग्रंथः प्रवृत्तः । अत्र श्लोके मनसः कारणत्वाभावमुपपाद्यत इति विरोध इति चेत् । सत्यं । तथाऽपि तात्पर्यानुसारेण मनस एव कारणत्वोपपादनमत्राप्याभिप्रेतं द्रष्टव्यं । तथा हि । न सुख न दुःखमतो मृषैव स्यादित्युक्तं । तत्र भ्रमे किं कारणमिति चेदुच्यते । जपाकुसुमसन्निधानेन स्फटिके लौहित्यमिव मनःसन्निधानादेवैवं प्रतीयतेऽतो मन एवाभिमानयुक्तं सत्तथा दर्शयति । तादृशं च प्रदर्शकं मनो मम नास्तीति सुखस्वरूपे मयि कथं दुःखमित्याशयात् । ग्रहाणामुक्तं दुःखहेतुत्वाभावमुपपादयति ॥ ग्रहा इति । आदित्यादिनवग्रहाः सुखदुःखयोर्निमित्तमिति चेत्तथाऽप्यजस्योत्पत्तिशून्यस्यात्मनो मत्स्वरूपस्य किं कुर्युः । कुतः । यतो नवग्रहा जनस्य स्वसदृशायां जानिमत एव पुंसः स्वकार्याणि कुर्युरिति वै ज्योतिःशास्त्रे प्रसिद्धं । जनस्य त इत्युक्तमेव विशदयति ॥ ग्रहैरिति । ग्रहैः पीडा ग्रहस्य गृह्यत इति व्युत्पत्त्या देहस्यैव जनिमतो भवंत्यतो ततोऽन्यः पीडायुक्तदेहाद्भिन्नः पुरुषः कस्मै क्रुध्येत । देहभिन्नपुरुषस्यापि पीडा ग्रहस्य गृह्यतेऽनेनेति करणव्युत्पत्त्या ग्रहणरूपस्य मनसः सत् एव मनोऽभिमाने सत्येव भवंत्यहं तु निर्मुक्ताभिमान इति न मम ग्रहनिमित्तपीडेति भावः । कर्मण उक्तं दुःखाहेतुत्वमुपपाद्यते ॥ कर्मास्त्विति । कर्म सुखदुःखयोर्हेतुश्चेदस्तु तथाऽप्यात्मनो मम किं । कुतः । तत्कर्माधीनं दुःखादि जडे कर्माधीने देहे युज्यते । आत्मनश्चाजडत्वे सिद्धे सति स्वचित्स्वस्वरूपज्ञानी सुपर्णः परमानंदरूपः पुरुषः कस्मै क्रुध्येत । एतादृशोऽप्यात्मनि कर्माधीनं दुःखादिकं जडे जडमनसि अभिमानयुक्ते प्राकृते मनसि सत्येव

प्रतीयते । मम तु न तादृशं मनोऽस्तीति कर्म मम दुःखादौ मूलं न भवतीत्यर्थः । कालस्योक्तं दुःखाहेतुत्वमुपपादयति ॥ कालोऽस्त्विति । कालः सुखदुःखयोर्हेतुश्चेदस्तु तथाऽपि तत्र देहे निर्मुक्ताभिमानस्य कालकृतविकारशून्यस्यात्मनो मे मम तेन किं स्यात् । कुतः । यतोऽसौ कालस्तदात्मनस्तत्कृतविकारयुक्ततया तदधीनस्यैव विकारापादक इत्यर्थः । मम च कालाधीनत्वाभावादिति ध्येयं । तर्हि देहस्यापि कालकृतविकारयुक्ततया कालाधीनत्वात्कालो देहस्य दुःखाद्यापादकोऽस्त्विति चेत् । सत्यं । जडत्वाद्देहस्य न संभवतीत्याह ॥ नाग्नेरिति । यथाऽग्नेरग्निनिमित्ततापो न जडत्वाद्धिमस्य हिमनिमित्तं तद्दुःखं न जडत्वादेवं देहस्यापि जडत्वात्कालादिसंबंधे विद्यमानेऽपि न दुःखयुक्तमिति कस्मै क्रुध्येतेत्याशयः । यदाऽध्यात्मदुःखादिकं दृश्यते तत्तदात्मनः कालकृतविकारवतोऽभिमानयुक्तस्य मनसः सत एव भवति नान्यथा । मम तु तदभावान्न दुःखमित्यर्थः । जडत्वाद्दुःखं नेत्यत्रैव तौ दृष्टांताविति ध्येयं । यदि जीवदेहयोर्न दुःखादिस्तर्हि हरेः स्यादित्यत आह ॥ नेति । बोद्धुः सर्वज्ञस्य दुःखं नेत्यर्थः । एतदेवोपपादयति ॥ न केनचिदिति । यथा संसृतिरूपिण आत्मनो जीवस्यात्मनो मनसः सत एवं द्वंद्वोपरागो भवति । तथा परतो ब्रह्मादेः परस्यास्य भगवतः क्वापि देशे काले च कथंचन केनचित्प्रकारेण वा द्वंद्वोपरागो नेत्यर्थः । उपसंहरति ॥ एवमिति । एवं प्रबुद्ध एवं विधज्ञानी भूतैः खलैः कृतादुपद्रवान्न बिभेति ॥ ५७ ॥ परमात्मनिष्ठां परमात्मनि मनोनिष्ठां हेतुभूतामेतां गाथामास्थायाश्रित्य । एतदामननेति यावत् । कीदृशीं पूर्वतनैर्महर्षिभिरध्यापितां । अनेन महर्षिसंप्रदायागतेयं गाथेत्युक्तं भवति ॥ ५८ ॥ निर्विद्य विरक्तो भूत्वा । प्रव्रज्य यत्याश्रमं गृहीत्वाऽसद्भिः स्वधर्मान्निराकृतोऽपि स्वधर्माद्भगवति मनोयोगरूपात् । इत्थमुक्तरीत्या गाथामाहेत्यर्थः ॥ ५९ ॥ गाथातात्पर्यार्थमाह ॥ सुखेति । आत्मनो मनसो विभ्रमोऽभिमानेन नानाविषयेषु परिभ्रमणमहंममेति भ्रमो वा यः स एव सुखदुःखप्रदो नान्यो जनदेवताऽऽत्मग्रहादिरतो मित्रोदासीनारिपत्र इदं मित्रमयमुदासीनोऽयं रिपुरिति य आत्मनः संसारः स स्वमनःकृतः स्वमनोऽभिमानकृत इत्यर्थः ॥ ६० ॥ भगवानुपसंहरति ॥ तस्मादिति । सर्वात्मना सर्वप्रकारेण मय्यावेशितधियायुक्तो मनोनिग्रहे य उपायस्तद्युक्तः सन् मनो विषयेभ्यो निग्रहाण योगसंग्रहो योगशास्त्रोक्तप्रमेयस्य संग्रहः एतावान्मनःसंयमलक्षण इत्यर्थः ॥ ६१ ॥ फलमाह ॥ य एतामिति । एतां गाथां ब्रह्मनिष्ठां ब्रह्मणि मनोनिष्ठां

साधनभूतां । द्वंद्वैः शीतोष्णसुखदुःखादिभिर्नैवाभिभूयते । द्वंद्वसहिष्णुर्भवतीति यावत् ॥ ६२ ॥ इति श्रीभागवतटिप्पण्यां त्रयोऽविंशोऽध्यायः ॥ ११—२३ ॥ ॥

॥ हरिः ॐ ॥ प्रमेयांतरं वक्तुं भगवान्प्रतिजानीते ॥ अथेति । सांख्यं ज्ञानसाधनीभूतसांख्यशास्त्रोक्तं प्रमेयं पूर्वैः पुरातनैर्भ्रमनिवर्तकतया निश्चितं निश्चयेन ज्ञातं यत्सांख्यं वैकल्पिकं विकल्प एव वैकल्पिकस्तं विकल्प शब्दवाच्यं भ्रमं ॥ १ ॥ प्रतिज्ञातमाह ॥ आसीदित्यादिना । अथैवं प्रतिज्ञानंतरं तत्प्रमेयं कथ्यत इत्यर्थः । आदौ कृतयुगे ज्ञानमर्थश्चेत्युभयमेकमेवासीदित्युक्तं तदयुक्तं । उभयोरैक्यायोगादित्यतस्तात्पर्यमाह ॥ यथैवेति । तथा तदर्थप्रतिपादकतया विद्यमानं ज्ञानं ज्ञायत इति व्युत्पत्त्या ज्ञानसाधनं शास्त्रं प्रसिद्धज्ञानं च ग्राह्यं । एवमुत्तरत्रापि । एवं हि सति शब्दार्थकमिति वक्ष्यमाणं संगच्छते । वेदादिशास्त्रं कृतयुगे यथाऽर्थोऽस्ति तथैव निश्चयेन ज्ञानमुत्पादयतीति भावः । ज्ञानार्थयोर्यथैवार्थस्तथा ज्ञानमिति सत्तया सादृश्यमभिप्रेत्य सादृश्याभेदसंश्रयाज्ज्ञानार्थैक्यं मूले उदाहृतमित्यर्थः ॥ तथेति । ज्ञानार्थयोः सादृश्यमित्यर्थः । तदन्येषु युगेषु कस्यचिदेव पुंसो यथाऽर्थस्तथा ज्ञानं भवतीत्यर्थः । संशयविपर्ययावपि शास्त्राद्भवत इति यावत् । अनेन द्विधा समभवदित्यस्य तात्पर्यमुक्तं ज्ञातव्यं । तथा च कृतयुगे ज्ञानं शास्त्रमर्थश्चैकमेवासीत् । कोऽर्थोऽविकल्पितं संशयविपर्ययाजनकमासीत् । कोऽर्थो वेदादिशास्त्रं कृतयुगे यथाऽर्थोऽस्ति तथैव निश्चयेन ज्ञानमुत्पादयतीति भावः । कुतः । यत्रत्या जना विवेकनिपुणा उपक्रमादिना वेदार्थज्ञाने कुशला अत इत्यर्थः । यथोक्तं । नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितमिति ॥ २ ॥ त्रेतादौ नैवमित्याह ॥ तदिति । फलस्वरूपेणेत्यन्यथाप्रतीतिपरिहाराय व्याचष्टे ॥ फलमिति । रूपयति निरूपयति । ददातीति यावत् । ज्ञानार्थयोः सत्यत्वमुत्पादयति ॥ ज्ञानार्थैक्येनेति । मिथो विरोधराहित्येनाबाधितत्वेन निमित्तेन ज्ञानार्थयोः सत्यत्वमित्यर्थः । कृतयुग एतद्विधा-समभवदित्यन्यथाप्रतीतिनिरासायाध्याहारेण योजयति ॥ पश्चादिति । त्रेतायामित्यर्थः । बृहदित्येतत्तादित्यस्य विशेषणमित्याशयेन तच्छब्दार्थं वदन्। बृहच्छब्दार्थमप्याह ॥ तदिति । शब्दार्थात्मकमुभय शब्दोऽर्थश्चेत्युभयं तच्छब्दवाच्यं बृहन्महत्तरमित्यर्थः । अनेनात्र सर्वत्र ज्ञानपदं शास्त्रपरमिति द्रष्टव्यं । तथा च केवलेन जडामिश्रेण फलरूपेण फलदात्रा तादृशज्ञानमुत्पाद्य तदनुसारेण।

फलं दातुमिति यावत् । मया सत्यं मिथो विरोधराहित्येनाबाधितं बृहन्महत्तरं वाङ्मनोऽगोचरं तज्ज्ञानमर्थश्चेत्युभय विकल्पितं विविधकल्पनाविषयं । तस्यैव विवरणं ॥ द्विधेति । इदमदो वेति संदिग्धं । अन्यदेवेति विपर्यस्तं चाभवादित्यर्थः । यथोक्त । किंचिदन्यथा जातं त्रेतायामित्यादि ॥ ३ ॥ ननु ज्ञानार्थयोर्वाङ्मनोऽगोचरत्वं बृहत्वं चोक्तं तत्कथमित्यतस्तदभिमानिनावाह ॥ तयोरिति । तयोरित्यादिश्लोकान्प्रमाणेनैव व्याचष्टे ॥ ज्ञानेत्यादिना । महालक्ष्मीर्नेत्याह ॥ गायत्रीति । उभयात्मकेत्यस्य तात्पर्यं ॥ तयोरिति । तेभ्यः समभवत्सूत्रमित्यस्यार्थमाह ॥ वायुस्त्विति । तमोरजःसत्त्वामित्यस्यार्थमाह ॥ गायत्रीति । एका प्रकृतिर्ब्रह्मपत्नी सत्त्वादिभेदतः सत्त्वादिगुणाभिमानिगायत्र्यादिभेदतास्त्रिरूपेति योज्यं । वायुस्तु ब्रह्मणः पुत्रः प्रकृतौ समजायते-त्युक्तं विशदयति ॥ तास्त्विति । गायत्री सावित्री सरस्वतीषु ब्रह्मणाऽऽदौ पृथक् पृथग्वीर्यमुत्सृष्टं स्थापितमनंतरं पृथगेवोत्पन्नं । उत्पत्त्यनंतरं तद्वीर्योत्पन्नं शरीरमेकत्रमागतमिति योज्यं । अन्यथा वाक्यार्थबाधापत्तेः । स क इत्यत आह ॥ स इति । तेभ्य उत्पन्नदेहैक्यवानित्यर्थः । मत्सूत्रेण च संयुतमित्येतद्विवृणोति ॥ तस्यापीति । विष्णोः सूत्र शब्दवाच्यत्वे निमित्त ॥ धारणादिति । ततो विकुर्वत इत्यस्यार्थमाह ॥ सूत्रेति । तत इत्येतत्प्रकारांतरेण योजयितुं परामर्शोपपत्तये तेभ्यः समभवत्सूत्रमित्यत्राभिप्रेतमर्थ-माह ॥ सूत्रात्मनेति । सूत्रात्मना सह महांश्चतुर्मुखोऽपि गायत्र्यादिभ्यो जात इत्यर्थः । तत इत्यस्यार्थमाह ॥ तस्यापीति । ब्रह्मण इत्यर्थः । स रुद्रो नेत्याह ॥ स चेति । अनंतः शेषः । अनंतादपि । न केवलं सूत्रादित्यपि शब्दः । ब्रह्मणश्च सूत्रात्मना यः सहोत्पन्नस्तस्माद्ब्रह्मणः सकाशादपि रुद्रोऽभूदित्यर्थः । एते त्रयो रुद्राः केषांचित्तत्त्वाभिमानिन इत्यत आह ॥ वैकारिक इत्यादि । वैकारिकादिभेदेन त्रिविधाहंकारस्यैते त्रयोऽभिमानिन इति भावः । अनेन वैकारिक इत्यस्य तात्पर्यमुक्तं भवति । गुणभेदतो वैका-रिकाद्यहंकारकार्यभेदत एकोऽपि रुद्रस्त्रिविधेत्यन्वयः । अयमत्रसंग्रहः । आदौ वासुदेवान्मायायां पुन्नामा ब्रह्मोत्पन्नस्तत्पत्नी प्रकृतिनाम्नी प्रद्युम्नादुत्पन्ना । प्रद्युम्नतश्चाथ कृतौ स्त्रियौ द्वे प्रजज्ञतुर्यमळे तत्र पूर्वा प्रधानसंज्ञा प्रकृतिर्जनित्रीत्युक्तेः । सा च प्रकृतिर्गायत्री सावित्री सरस्वतीति त्रिविधा जाता । तासु पुन्नामकब्रह्मणा वीर्यमुत्सृष्टं ततः संकर्षणाज्जयायामुत्पन्नोऽपि सूत्रनामा वायुः पुनरुत्पन्नस्तेन सह ब्रह्मा स्वयमपि स्वास्त्रियां स्वपुत्रत्वेन जातः । सूत्रनामकवायोः सकाशाद्रुद्र उत्पन्नः । तैजसा-

हंकाराभिमानी । स्वपुत्रत्वेन सूत्रनामकवायुना सहोत्पन्नब्रह्मणः सकाशादनंत उत्पन्नस्तस्माच्चानंतात्पुना रुद्र उत्पन्नः । स तु ब्रह्मोत्पन्नानंतो रुद्रस्तामसाहंकाराभिमानी । स्वपुत्रत्वेनोत्पन्नब्रह्मणः सकाशात्साक्षादेव रुद्र उत्पन्नः । स तु वैकारिकाहंकाराभिमानीति ॥ तथा च तयोरेकतर इत्यादेरक्षरार्थः ॥ तयोर्ज्ञानार्थयोर्मध्ये एकतरोऽर्थोऽर्थाभिमानिनी । या प्रकृतिर्ब्रह्मपत्नी या प्रद्युम्नात्कृतोत्पन्ना सा प्रकृतिरुभयात्मिका विष्णुश्रीस्वामिका । तयोर्मध्येऽर्थापेक्षयाऽन्यतमो भागो ज्ञानं यत्सः पुरुषोऽभिधीयते । तन्नामा ब्रह्मज्ञानाभिमानीत्यर्थः । सोऽप्युभयात्मक इति द्रष्टव्यं । अतस्तयोर्बृहत्त्वादिकं युक्तमित्याशयः । पुनरर्थात्मकप्रकृतेर्ज्ञानात्मकब्रह्मणश्च बृहत्त्वमुपपाद्यते ॥ तम इत्यादिना । मया प्रक्षोभ्यमाणायाः कार्याभिमुखीभूतायाः पुरुषानुमतेन पुरुषनामकब्रह्मसमत्या । तत्कृतगर्भाधानेनेति यावत् । प्रकृतेर्ब्रह्मपत्न्या अव्यक्तावांतराभिमानिन्याः सकाशात्सत्त्वादयो गुणास्तदभिमानिन्यो गायत्र्याद्या जाताः । मूलाव्यक्तगुणत्रयाणामेका रमैवाभिमानिनी । तथाऽपि महदादिकार्यानुस्यूतमव्यक्तं गुणत्रयं चास्ति । तदभिमानित्वमेव ब्रह्मपत्नी प्रकृत्यादेरिति ध्येयं । तेभ्यः सत्त्वाद्यभिमानिगायत्र्यादिभ्यः सकाशान्मत्सूत्रेण मदाख्येन सूत्रेण धारकेण संयुतं मदधीनं । मत्प्रेरितमिति यावत् । सूत्रं वायुस्तेन सह ब्रह्मा च रूपांतरेणोत्पन्नस्ततो विकुर्वतः सूत्राद्यो विमोहकोऽहकारो रुद्रस्तैजसः स जज्ञे । तथा विकुर्वतस्तस्माद्ब्रह्मणो योऽहंकारो विमोहनो वैकारिको रुद्रः स जज्ञे । तथा ततो ब्रह्मणो योऽहंकारो विमोहनोऽनंतः स जज्ञे । एवं त्रिवृत् त्रिःप्रकारवान् रुद्रो जज्ञ इत्यर्थः ॥ ३–५ ॥ तामसाहंकारादिरूपो रुद्रः कीदृश इत्यत आह ॥ तन्मात्रेति । अत्र चिदात्मकत्वं रुद्रस्योच्यत इति प्रतीतिवारणायार्थमाह ॥ चिदचिद्यद्वशे सर्वमिति । तथा च तन्मात्र शब्देन पचभूतान्यपि ग्राह्याणि । मनः शब्देनेंद्रियाभिमानिदेवतादेहाश्च ग्राह्याः । वैकारिकादिभेदेन त्रिवृत् । चिदचिन्मयस्तत्स्वामी रुद्रः पंचतन्मात्रपंचमहाभूतेंद्रियतदभिमानिदेवतादेहमनसां कारणमित्यर्थः ॥ ७ ॥ तद्विविच्य दर्शयति ॥ अर्थ इति । तन्मात्रकः पंचतन्मात्रारूपोऽर्थः पंचभूतानि च तामसाज्जज्ञे । इंद्रियाणि च तैजसाज्जातानि । मनसा सहेति शेषः । एकादशदेवतास्तद्देहा मनसा सहैव कृताज्जाता इत्यर्थः ॥ ८ ॥ एतैस्तत्त्वैर्ब्रह्मांडोत्पत्तिप्रकारमाह ॥ मयेति । भावास्तत्त्वानि । संहत्य संभूयैककार्यकारिणो न स्वातंत्र्येण ॥ ९ ॥ ममायतन इत्येतदेव दर्शयाति ॥ तास्मिन्निति । तस्मिन्नंड इत्यन्वयः । योऽहं

समभवं तस्य मम नाभ्यां विश्वाख्यं सर्वलोकोत्पादनं । तत्र पद्मे । आत्मभूर्ब्रह्मा । अत्राहं समभवामिति हरेरुत्पत्तिप्रतीतेस्तां प्रमाणेनैव निराकरोति ॥ चिदानंदेति । तर्ह्येवमेव चतुर्मुखोऽप्यनुत्पन्नं किं नेत्याह ॥ तदिति । भूतदेहो भौतिकदेहवान् । चतुर्मुखस्तन्नाभेर्जातात्पद्मादभूदित्यन्वयः । सर्वांडव्याप्तदेह इति स्वरूपकथनं । पूर्वं विराट्कल्पमभिप्रेत्याहुः । तथा चाहं समभवं सम्यगेवाभवं । चिदानंददेहयुक्त एव प्रकटोऽभवमित्यर्थ उक्तो भवति ॥ १० ॥ स आत्मभूः रजसा रजोगुणमुपादानीकृत्य विश्वात्मा विश्वांतर्नियामकः । भूरादिभेदेन त्रिधा स्थितान् सपालान्दिक्पालसहितान् लोकान् ॥ ११ ॥ ओको निवासस्थानं भूतानां पिशाचादीनां पदं स्थानं भुव आसीत् । त्रितयाद्भूरादिलोकत्रयात्पर महरादि । सिद्धानामपरोक्षज्ञानिनां क्षीणप्रारब्धानां पदमासीत् ॥ १२ ॥ नागानां सर्पाणां भूमेरध ओकः पातालादिस्थानं । फलितमाह ॥ त्रिलोक्यामिति । सत्त्वादिभेदेन त्रिगुणात्मनां कर्मणां गतयस्त्रिलोक्यामेव तदंतरेव । सात्त्विककर्मणा स्वर्गलोकः । राजसेन भूः । तामसेन भुवरिति ॥ १३ ॥ महरादिलोकसाधनमाह ॥ योगस्येति । योगादेर्महर्जनस्तपःसत्यमित्येता अमला गतयः फलानीत्यर्थः । भक्तियोगस्य तु मद्गतिरेव वैकुंठादिस्थमल्लोकप्राप्तिरेव फलमित्यर्थः । अत्र भक्तियोगस्य मद्गतिरित्युक्तत्वान्महरादिलोकप्राप्तौ भगवद्भक्त्यपेक्षाभावः प्रतीयते । तदनुपपन्नं । भक्त्यभावे महरादिलोकप्राप्तेरप्यनुपपत्तेरित्यत आह ॥ महरादीनामपीति । प्राप्ताविति शेषः । तर्हि भक्तियोगस्य मद्भक्तिरिति कथमुक्तमित्यत आह ॥ आधिक्येनेति । महरादिलोकप्राप्तौ यादृशो भक्तियोगोऽपेक्षितस्तदपेक्षयाऽऽधिक्येनापेक्षितत्वात् । वैकुंठप्राप्तेरिति शेषः । महरादिप्राप्तौ भक्तियोगोऽपेक्षित इत्यत्र प्रमाणमाह ॥ नैवेति । विष्णुप्रवेशनपर्यंतं भक्त्युद्रेकात्क्रमादूर्ध्वलोको भवति । भक्त्या महर्लोकस्तदपेक्षया भक्त्युद्रेकाज्जनोलोकस्तदपेक्षया भक्त्युद्रेकात्तप इत्यादि । तपोलोकप्राप्तेर्ज्ञानगतित्वोक्त्या महर्जनःसत्यादिलोकप्राप्तौ ज्ञानानपेक्षेति प्रतीयते। अतस्तत्रापि महरादिलोकप्राप्तौ ज्ञानमपेक्षितमेवेत्याह ॥ एवमिति । भक्तिवदेवेत्यर्थः ।ज्ञानमपरोक्षं । ज्ञानस्य गतय इति मूले कथमुच्यत इत्यत आधिक्यविवक्षयेत्याह ॥ ज्ञानेति । विष्णुप्रवेशपर्यंतं क्रमाज्ज्ञानोद्रेकात्क्रमादूर्ध्वलोका भवंतीत्यर्थः । नन्वथाऽप्यनुपपन्नमेव तत् । योगतपोज्ञानमिति साधनानि त्रीण्युक्तानि महर्जनःस्तप सत्यवैकुंठः इति प्राप्या लोकाः पंचोक्ताः । अतः कथमेतदिति चेत् । सत्यं । अत्रापि पंचसाधनान्युक्तानि । तथा हि । अत्र योग शब्देन द्विविधयोगो

विवक्षितः । ज्ञानशब्देनापि द्विविधं ज्ञानं । एव च पादयोगो योगस्तपो ज्ञानं महाज्ञानं चेति तेषां क्रमेण महरादिलोकप्राप्तिः फलमित्याशयेन तेषा लक्षणान्याह ॥ नित्यश इति । प्रत्यहमित्यर्थः । मुहूर्तमात्रं प्रत्यहं भगवद्रूपस्यापरोक्ष्येण दर्शनं ज्ञानमित्यर्थः । ततोऽधिकं द्विमुहूर्तपर्यंतं नित्यशो दर्शनमित्यर्थः । षण्मात्रकलया अ अ इ इत्यादिपट्‍ह्स्वाक्षरोच्चारणकालपर्यंतं विद्यमाना याऽपरोक्षदृशिस्तया नित्यं प्रत्यहं यदखंडितं ध्यानं तत्तपः । अखंडितध्यानसमये प्रत्यहं षण्मात्रोच्चारणकालपर्यंतं चेद्धर्यपरोक्षज्ञानं भवति । तर्हि तादृशज्ञानयुक्तं ध्यानं तप इत्युच्यत इत्यर्थः । एकमात्रयुजां अ इत्येवमेकह्स्वाक्षरोच्चारणकालपर्यंतं विद्यमानयाऽपरोक्षदृशा नित्यं प्रत्यहं युक्तं यन्नित्यमखंडितं ध्यानं तद्योगाख्यमित्यर्थः । अत्राप्यखंडितध्यानसमये प्रत्यहमेकमात्रोच्चारणकालपर्यंतं यदपरोक्षज्ञानं तद्युक्तं ज्ञानं योग इत्याशयः । तच्चतुर्भागयैकमात्रोच्चारणे यावान्कालस्तस्य चतुर्धाविभागे क्रियमाणे सति एकस्मिंश्चतुर्थे भागेऽतिसूक्ष्मके जायमानयाऽपरोक्षदृशा युक्तं ज्ञानं पादयोगाख्यं । एकमात्रोच्चारणकालचतुर्थभागे जायमानापरोक्षज्ञानयुक्तं ध्यानं पादयोग इत्यर्थः । पादयोगान्महर्लोक इति । ननु मध्यमाज्जनलोकादिति श्रवणादिरूपपरोक्षज्ञानेनापि महर्लोक प्राप्त्युक्तेः कथमेतत् । सत्यं । अपरोक्षज्ञानादपि तद्भवतीति । अत्र त्वपरोक्षज्ञानिनां निर्मुक्तप्रारब्धानां चरमदेहादुत्क्रांतानामवस्थाने सांतानिकलोका एते कथ्यंत इति न दोषः । एतदभिप्रायेणैव बहिस्त्रिलोक्या गतिमामनंति विद्यातपोयोगसमाधिभाजामिति द्वितीयस्कंधे कथितं । तत्र विद्यातपोयोगयुक्तो यः समाधिरखंडध्यानं तद्भाजामपरोक्षज्ञानिनां गतिं त्रिलोक्या बहिरेवामनंतीत्यर्थो वाच्य इति न कोऽपि दोष इति संप्रदायविदः । तथा च योगस्य पादयोगस्य तपसो ज्ञानस्य महाज्ञानस्य च महराद्या गतय इति मूलं योज्यं ॥ १४ ॥ सर्वथा भक्तियोगशून्यस्य का गतिरित्यत आह ॥ मयेति । अत्र कालात्मनेत्यभेदप्रतीतेर्व्याचष्टे ॥ कालात्मनेति । कल ज्ञाने कल कामधेनाविति पठंति । तथा च कर्मयुक्तं । कर्मानुसारेणेति यावत् । कालात्मना ज्ञानात्मना धारकेण मया प्रेरितं सत् । गुणानां प्रवाहो यस्मिंस्तादृशे एतस्मिन्संसारे उन्मज्जति निमज्जत्यूर्ध्वं गतं भवत्यधश्च गतं भवतीत्यर्थः ॥ १५ ॥ पुनरर्थज्ञानयोर्बृहत्वमुपपाद्यते ॥ अणुरिति । भावः पदार्थः । प्रसिद्धयत्युत्पन्नो वर्तते स सर्वोऽपि भावः प्रकृत्या ब्रह्मपत्न्या पुरुषेण चतुर्मुखेन चेत्युभयं संयुक्तस्ताभ्यां व्याप्तो वर्तत इत्यर्थः ॥ १६ ॥ प्रसंगात्प्रकृतिपुरुषाभ्यां

प्रकृत्यादिकमुपादानीकृत्य सृष्टं जगत्किं प्रकृत्यादिकारणेनाभिन्नं भिन्नाभिन्नं वेत्याशंकायामाह ॥ यस्त्विति । यस्य वस्तुनो महदादेर्यः प्रकृत्यादिरुपादानमंतःस्थानं च यस्मात्स एव मध्यं तस्य वस्तुनस्तत्प्रकृत्याद्युपादानं स्वभावत एवात्यंताभिन्न एव । तर्हि कथं प्रकृतेर्महत्तत्त्वमुत्पन्नमित्यादिव्यवहार इत्यत आह ॥ विकार इति । व्यवहारार्थो व्यवहारप्रयोजनकः । तस्यायं विकारः कार्यमिति व्यवहारमात्रप्रयोजनकमेव । व्यवहार एवायं न वस्तुतस्तस्मात् । विकारोऽयामि यावत् । तत्र यथेति दृष्टांतः । तथा तैजसो रुचिकादिः । पार्थिवः पटादि सुवर्णस्य ततोश्च विकारः कार्यमिति व्यवहारमात्र तद्वदित्यर्थः । नन्वेतदयुक्तं । कार्यकारणयोर्भेदाभेदस्यैव शास्त्रे व्यवस्थापितत्वेन विकारो व्यवहार इत्यत्यंताभेदोक्त्ययोगादित्यत आह ॥ प्रकृतेरिति । प्रकृतेर्जडप्रकृतेर्महदादिकार्योपादानभूतो यः कोप्यंशो व्यतिषंगविशेषरहितोंऽशसमुदायः स विकाराणां महदादिकार्याणां सकाशाद्भेदो भिद्यंत इति भेदो भिन्न इष्यत इत्यर्थः । तथा विकाराणां प्रकृत्याद्येकैकांशतोऽपि भेदो यतोऽभेदवर्जितो नात इत्यर्थः । अभेदं वा । व्यतिषंगविशेषविशिष्टांशैरत्यंताभेदमित्यर्थः । तथा च यथा पटे व्यतिषंगविशेषरहितसर्वतंतूनामेकैकतंतुना च भेदाभेदः । व्यतिषंगविशेषविशिष्टतंतुभिरत्यंताभेद एव । तंतुभ्योऽन्यः पटः साक्षात्कस्य दृष्टिपथं गत इत्युक्तेस्तद्वत्प्रकृतेऽपीति । व्यतिषंगविशेषाविशिष्टकारणस्यायं विकार इति व्यवहारमात्र एव । कुतः । यतो व्यतिषंगविशेषविशिष्टं कारणमेव कार्यमिति न कश्चिद्दोष इति भावः ॥ १७ ॥ यदुपादेयेति श्लोके ब्रह्मण एव सत्यत्वं नान्यस्येत्युच्यत इत्यन्यथाप्रतीतिपरिहाराय व्याचष्टे ॥ पारमार्थिकेति । तत्स्वातंत्र्याख्यं पारमार्थिकसत्यत्वं । तर्हि विश्वं सत्यमित्यादेः का गतिरित्यत आह ॥ तदिति । विष्ण्वितरेषां सदाऽस्तित्वमेव सत्यत्वं तदेव च श्रुत्यादावुच्यते न स्वातंत्र्यरूपमित्यर्थः । यदुपादेयेत्यादि व्याचष्टे ॥ यदिति । पूर्वपदार्थमाह ॥ पूर्व इति । आदिरंतश्चेत्यादि व्याचष्टे ॥ आदिरिति । यद्ब्रह्माणि यच्च तद्ब्रह्म तस्मिन्यद्ब्रह्माणि । यस्मिन्नित्यस्यार्थोऽय । यत इत्यस्यार्थः ॥ यस्मादिति । तदित्यस्यार्थः ॥ तद्ब्रह्मेति ॥ तथा चायमर्थः ॥ न प्रकृतिपुरुषयोरेतावता स्वातंत्र्यं मंतव्यमित्युच्यते ॥ यदिति । पूर्वो भावः प्रकृत्यादिकारणपदार्थसार्थः । यद्ब्रह्मनिमित्तकारणभूतमुपादायाश्रित्य । यत्प्रेरणयेति यावत् । परं महदादिकार्यमुद्दिश्य विकुरुते विकरोति तत्सत्यं । तथा यतो यस्मात्कारणाज्जगत आदिरंतश्च यस्मिन्यद्ब्रह्माणि यदधीनत्वेन वर्तते तत्तस्मात्कारणात्तद्ब्रह्मैव सत्य

स्वतंत्रमित्युच्यत इत्यर्थः ॥ १८ ॥ इतोऽप्यहमेव स्वतंत्र इत्याह ॥ प्रकृतिरिरिति । अत्र पुरुषः परो भगवानिति प्रतीतिवारणायानूद्य व्याचष्टे ॥ पर इति । कः कालो योऽभिव्यंजक इत्यह आह ॥ कालोऽपीति । अभिव्यंजकत्वेनोक्तः कालः कालनामास एव हिरण्यगर्भ एव रूपांतरेणोच्यत इत्यर्थः । एवं व्याख्यातार्थे प्रमाणमाह ॥ कालेति । तत्पत्नी ब्रह्मपत्नी । प्रकृतेर्महदादिकार्यानुस्यूताव्यक्तभागस्य । सर्वशः सर्वत्र देशे काले च । सूत्रमारभ्य सर्वं जगत्प्रसूयते । अनेन प्रकृतिर्ह्यस्योपादानमित्यस्यार्थ उक्तो भवति । ब्रह्मतात्त्रितयं त्वहमिति प्रकृत्याद्यभेद उच्यत इति भ्रांतिवारणाय प्रमाणेनार्थमाह ॥ आधार इति । कालप्रकृतिपुंसां चाधार इत्यादिसंबंधः । ननु मूलप्रकृतेरेवाधारादित्वात्केशवस्य तत्कथमित्यत उक्तं ॥ तन्मूलेति । च शब्दात्प्रसवितेति ग्राह्यं । सिसृक्षत्वविशेषं तत्साक्षाद्भगवदिच्छया प्राग्नैव सृष्टेत्युदितेत्युक्तेः ॥ तथा चायमर्थः ॥ अस्य सूत्रादेर्जगत उपादानं प्रसवित्री या प्रकृतिर्ब्रह्मपत्नी यश्च पृथिवीवत्कार्याधारभूतः परः पुरुषो हिरण्यगर्भो यश्च सतः सतां प्राप्नुवतो जायमानस्य कार्यस्याभिव्यंजको निमित्तभूतः कालः कालाभिमानी ब्रह्मास्ति तत्त्रितयं तेषां प्रसवितृत्वाधारत्वाभिव्यंजकत्वशक्तिप्रदः । तत्त्रितयं तेषां कालप्रकृतिपुंसां त्रितयमाधारो व्यंजकः प्रसविता चातो ब्रह्म पूर्णभूतोऽहमेवेत्यर्थः ॥ १९ ॥ इतोऽपि जगत्सृष्ट्यादिकारणं ब्रह्मैवेत्याह ॥ सर्ग इति । तावत्पर्यंतं सर्गः प्रवर्तत इत्युक्तं । तत्र स्थित्यत इत्यस्यार्थमाह ॥ यावदिति । उत्पत्तिरिति सर्ग शब्दार्थः । स्थित्यंतो यावदीक्षणमित्यसंगतिपरिहारायानूद्य व्याख्याति ॥ यावदीक्षणमिति यावद्यदेत्यर्थः । भगवतः स्मरणं नाम चिंता । इच्छेति यावत् । न तु सस्कारकारणकं ज्ञानं नित्यानुभवत्वादिति भावः ॥ तथा चायमर्थः ॥ महान् गुणविसर्गः सत्त्वादिगुणोत्पत्तिनिमित्तकोऽयं विसर्गो यावत्पर्यंतं स्थितिरस्ति तावत्पर्यंतं प्रवर्तते । सर्गस्थित्योरेककालीनत्वानुपपत्तिपरिहाराय आह ॥ पौर्वापर्येणेति । सर्गानंतर स्थितिस्तदनंतरं पुनः सर्गः पुनः स्थितिरिरिति । पौर्वापर्येण नित्यशः प्रलयपर्यंतमेवं प्रवर्तत इत्यर्थः । प्रलयः कदेत्यत आह ॥ स्थितीति । यावद्यदा जगतः प्रलयः स्यादिति भगवत ईक्षणमिच्छा भवति तदैव स्थित्यतः स्थितेरंतः प्रलयो भवतीत्यर्थः ॥ २० ॥ तमेव प्रलयप्रकारं दर्शयति ॥ विराडित्यादिना । पंचत्वायाविशेषायेति विशेषणविशेष्यभावप्रतीतिनिरासायार्थमविशेषायेत्येतत्पदार्थज्ञानाय विशेषशब्दार्थमाह ॥ विशेषेणेति । परान्वयन्यायेन शब्दादि-

पंचगुणानामपि पृथिव्यामभिव्यक्तिरस्तीत्याशयः । विशेषेणविशेष्यभावभ्रमं वारयति ॥ पचत्वानतरमिति । तथा च कल्पविकल्पः कल्पः कल्पना विकल्पोऽवांतरभेदकल्पना । तदुभयसहितः प्राणी यो लोकस्तद्वान्विराडंडकोशो मयाऽऽसाद्यमानः । सद्लृ विशरणेत्यादिधातोः । विशीर्यमाणो नाशार्थमारब्धैर्भुवनैरंतर्गतलोकैः सह पंचत्वाय नाशाय कल्पते नष्टो भवतीत्यर्थः । अनंतरमविशेषाय कल्पते विशेषाभावाय कल्पते । खर्परभूतपृथिवीनाशो भवतीत्यर्थः ॥२१॥ प्रस्तुतं पृथिव्यादिलयं विविच्याह ॥ अन्न इत्यादिना । पृथिव्या ओषधायः । औषधीभ्योऽन्नमन्नात्पुरुष इति सृष्टौ क्रमस्तद्वैपरीत्येन लयक्रममाह ॥ अन्न इत्यादिना । न केवलमत्र जडादीनामेव लयो मंतव्यः किं नाम तदभिमानिदेवानामपीत्याशयेन तत्र प्रमाणमाह ॥ देव्यामिति । आदि पदेन सर्वत्रापि देवताविवक्षोक्तास्ति । प्रमाणशेषे तदुक्तरीत्या द्रष्टव्येति सूचयति । मर्त्यः पुरुषदेहाभिमानी धानास्वोषधीषु ॥२२॥२३ शब्दतन्मात्राया लयो वक्तव्यस्तमनभिधायेंद्रियाणां तावल्लयप्रकारमाह ॥ इन्द्रियाणीति । स्वयोनिषु तैजसाहंकारे ॥ २४ ॥ वैकारिक इत्यहंकारतत्त्वकार्यविशेषप्रतीतिपरिहाराय वैकारिकेश्वरब्रह्मशब्दैश्चतुर्मुखो वाच्य इत्याह ॥ विकारजत्वादिति । महांस्तदभिमानी चतुर्मुखः सत्त्वादिगुणविकारतत्त्वात् । तथा चेंद्रियदेवा मनश्च योनौ स्वकारणे वैकारिकेऽहंकारे लीयंत इति वक्तव्यं । योनिरिंद्रियदेवतादेहादिर्योनिर्वैकारकोऽहंकारो वैकारिके ईश्वरे ब्रह्माणि स्वपुत्रतया स्वस्त्रीषु गायत्र्यादिषु सूत्रेण सहोत्पन्ने महति ब्रह्माणि लीयत इत्यर्थः । तैजसश्च तस्मिन्नेव लीयत इत्यपि वक्तव्यं । अंबरं शब्दतन्मात्रमित्युक्तं । शब्दस्य लयो नोक्तस्तमिदानीमाह ॥ शब्द इति । भूतादिं तामसाहंकारं । भूतादिश्च महति सूत्रेण सह स्वपुत्रतया स्वस्त्रीषूत्पन्ने ब्रह्माणि । गुणवत्तमो महान्स्वेषु गुणेषु लीयत इत्युक्त । तदप्रतीतेः प्रमाणेनैव व्याकरोति ॥ गायत्रीत्यादिना । गुणवत्तम इत्यस्यार्थः ॥ गुणाधिक इति । तस्यास्त्रिरूपप्रकृतेः पतिरपि तज्जत्वात्त्रिरूपप्रकृत्याख्यस्वपत्नीजन्यत्वात्तत्र लीयत इत्यर्थः । तेऽव्यक्ते संप्रलीयत इत्यस्याव्यक्तं रमेत्यन्यथाप्रतीतिनिरासायार्थमाह । सत्त्वादिभेदतः सत्त्वाद्यभिमानिगायत्र्यादिप्रभेदतस्त्रिविधा सा मूलरूपायां प्रकृत्यामव्यक्तावांतराभिमानिन्यां प्रद्युम्नजन्यायां प्रधानसंज्ञाया ब्रह्मपत्न्यां लीयत इत्यर्थः । तत्काल इति मूलप्रकृतेर्ब्रह्मपत्न्याः काले न साक्षाल्लय इत्याशयेन मूलानुक्त तदभिमेतं द्वारमाह ॥ प्रकृतिरिति । तत्काल इत्यस्यार्थमाह ॥ स इति । पुरुषनामा विरिंचः । कालो मायामयं । जीव इत्यस्यार्थमाह ॥ सा नेति ।

सा महालक्ष्मीः सत्त्वाद्यभिमानिनी श्रीभूदुर्गादिभेदेन त्रिविधा सती विद्यमाना पश्चादेकत्वमापद्य प्राप्य विष्णौ लीयत इत्यर्थः । कस्तस्य हरौ लीयत इत्यत आह ॥ हरेरिति । प्रकृतिर्ब्रह्मपत्नी पुरुषाभिधे विरिंचे लीयत इत्युक्तं । तत्र विरिंचे तस्या देहलयो नास्ति । लक्ष्मीवत्तस्या अपि पुरुषसामीप्यप्राप्तिरेव लय इति प्रमेयविशेषं शिष्यानुकंपयाऽऽह ॥ पुरुषेणेति । तत्र युक्तिमाह ॥ ब्रह्मा चेति । मुक्तावेषां देवानां येषु देवेषु प्रवेशादिरूपं सायुज्यमस्ति तेषां देवानां प्रलयकालेऽपि तत्र प्रवेशेन देहलयो वक्तव्यः । ब्रह्मसरस्वत्यौ तु मुक्तौ भिन्नदेहावेव परस्परं समीपे वर्तेते न तु सरस्वत्या ब्रह्मप्रवेशरूपं सायुज्यं । अतः प्रलयकालेऽपि भिन्न-देहावेव । समीपगौ संतौ सहैव वासुदेवं विशत इत्याशयात् ॥ तथा चाय प्रमाणार्थः ॥ यतो ब्रह्मा प्रकृतिश्चेत्युभौ विलये भिन्नदेहौ समीपस्थावत एव भिन्नदेहौ संतौ ज्ञानमात्रौ ज्ञानरूपौ विमुक्तिगावन्यथा तन्न स्यादिति । स गिरं च रुैव वायुं विशत्यंज इतीह निर्णय इत्यनुव्याख्याने गिरो ब्रह्मणि प्रवेशकथनं यत्तदपि निरवकाशैतत्प्रमाणानुसारात्सामीप्यार्थकं व्याख्येयमित्याहुः ॥ तथा चायं स लीयत इत्यादेरर्थः । महान् ब्रह्मा गुणवत्तमोऽपि गुणवत्त्वेन तदुत्तमोऽपि स्वेषु स्वजनकेषु गुणेषु गायत्र्यादिषु लीयते तज्जत्वादित्याशयः । ते गुणाभिमानिन्यो गायत्राद्या अव्यक्ते प्रद्युम्नजन्यायामव्यक्तनाम्न्यां मूलप्रकृति शब्दवाच्यब्रह्म-पत्न्यां तदव्यक्तं पुरुषे पुन्नामकब्रह्मणि लीयते तत्सामीप्यं प्राप्नोति । तत्पुन्नामकब्रह्मा काले कालनामके स्वस्मिन् लीयते । अत्र पुन्नामकब्रह्मणः पूर्वं वासुदेवात्कालनामको ब्रह्मोत्पन्नोऽस्तीति तात्पर्यनिर्णयादावनुक्तमप्येतद्बलात्कल्पनीयमेव । न ह्यनुक्तिर्दोष एव । कालः कालनामा ब्रह्मा मायामये मायामय शब्दवाच्ये जीवे सर्वप्राणधारकत्वेन तच्छब्दवाच्यायां मायायां वासुदेवपत्न्यां स्वमातरि लीयते । अत्र प्राणस्य तेजसि लयोमार्गमात्रमुदाहृतमिति वासुदेवप्रवेशे तदनुज्ञाग्रहणमेव लय-शब्दार्थ इति विवेको भाष्योक्तरीत्याऽनुसंधेयः जीवो महालक्ष्मीरजे आत्मनि व्याप्ते मयि लीयते । स्वरूपैरेकतां प्राप्य मत्समीपे तिष्ठतीत्यर्थः ॥ २६ ॥ आत्मस्वरूपं वक्ति ॥ आत्मेति । केवलो जडामिश्र आत्मा पूर्णगुण आत्मस्थोऽनन्याधारः । विकल्पस्य मिथ्याज्ञानस्यापाय एव यस्य लक्षणं स तथोक्तः । सम्यग्ज्ञानस्वरूप इत्यर्थः ॥ २७ ॥ सृष्ट्यादिकथनफलमाह ॥ एवमिति । एवं भगवत एव स्वातंत्र्यमन्यस्य तदधीनत्वं चान्वीक्ष्यमाणस्य विचारयितुमधिकारिणो विरुद्धकल्पनाख्यो मनस उत्पन्नभ्रमो हृदि

बुद्धौ कथं तिष्ठेत। नश्यतीति यावत्। तत्र दृष्टांतो व्योम्न्यर्कोदये तम इवेति ॥ २८ ॥ उक्तार्थमुपसंहरति ॥ एष इति। सांख्याविधिः सांख्यशास्त्रोक्तप्रकारः। संशयग्रंथिमंतःकरणाख्यबंधं भिनत्तीति तथोक्तः। परावरदृशा सर्वज्ञेन मया प्रतिलोमानुलोमाभ्या प्रतिलोमेन विपरीतक्रमेण संहाराविधिः संहारप्रकारः। अनुलोमेन च क्रमेण सृष्टिविधिः सृष्टिप्रकारश्च मया सांख्यशास्त्रोक्तप्रकारेण त्वां प्रति प्रोक्त इति भावः ॥ २९ ॥ इति श्रीभागवतटिप्पण्यां चतुर्विंशोऽध्यायः ॥ ११—२४ ॥ ॥

॥ हरिः ॐ ॥ उक्तज्ञानाधिकारी सात्त्विक एवेत्याशयेन सत्त्वादिगुणानां वृत्तीराहात्राध्याये। तत्राह भगवान् ॥ गुणानामिति। सत्त्वादिगुणास्त्रिविधाः। अमिश्रा मिश्राः शुद्धाश्चेति। तत्रामिश्रानां गुणानां अपि शब्दान्मिश्राणां च गुणानां च मध्ये येन गुणेन पुमान्यथा भवेत्तदिदं शंसतो मे सकाशादुपधारय ॥ १ ॥ तत्रादावमिश्रसत्त्वगुणप्रवृत्तीराह ॥ शम इति। ईक्षा ज्ञानं। स्मृतिः शास्त्रार्थस्मरणं। त्यागो निषिद्धस्य। अनिषिद्धेच्छाभावोऽस्पृहा। निस्तुतिः स्वप्रशंसाभावः। धृतिश्चित्तधैर्यं। एताः सत्त्वस्य वृत्तयः। तद्वान्सात्त्विको ज्ञानाधिकारी नेतर इति भावः ॥ २ ॥ रजोवृत्तीराह ॥ काम इति। कामो विषयरागः। ईहा निषिद्धचेष्टा। स्तंभ उक्तानंगीकारः। आशीर्धनाकांक्षा। भिदाऽन्यथाज्ञानं। असुखं दुःखं। नन्वेतदनुपपन्नं। दुःखस्य तमोगुणकार्यत्वेन तमोवृत्तिमध्ये परिगणनीयत्वेन रजोवृत्तिमध्ये परिगणनायोगात्। नथात्वे तमोपेक्षया रजसः क्लिष्टत्वापत्तेरित्यतः कैमुत्यविवक्षयेदमित्यभिप्रेत्य तात्पर्यमाह ॥ राजसेऽपीति। पुरुष इत्यर्थः। तद्राजसे दुःखवचनं यदा राजसेऽपि पुंसि दुःखं तदा तामसे पुंसि दुःखं भवतीति किमुवाच्यमित्याशयेन तामसेति। दुःखमिति। दुःखातिशयाविवक्षयेत्यर्थः ॥ ३ ॥ तमोवृत्तीराह ॥ क्रोध इति। माया कपट। कलिः कलहः ॥ ४ ॥ उक्तवृत्तीर्विविनक्ति ॥ सत्त्वस्येति। संन्निपातो मिश्रता। मिश्रगुणवृत्तीः शृण्वित्यर्थः ॥ ५ ॥ सान्निपातो मिश्रगुणकार्यं। मात्राः शब्दादयः। सन्निपाते सति गुणानां मिश्रतायां सत्यां मनादिभिरिंद्रियैः शब्दादिविषयकं ज्ञानं भवतीत्यर्थः ॥ ६ ॥ यदाऽसौ पुमान् धर्मे परिनिष्ठितो भवति तदा तस्य पुंसो गुणानां सन्निकर्षो मिश्रीभावः श्रद्धावहो भवति। यदाऽर्थे परिनिष्ठितस्तदा धनावहः। यदा कामे परिनिष्ठितस्तदा रत्यावह इति योज्यं ॥ ७ ॥ गृहाश्रमे यर्हि यदा प्रवृत्तिलक्षणां निष्ठामनुतिष्ठेत। स्वधर्मनिष्ठो भवतीति यावत्।

स्वधर्मे च यद्यनुतिष्ठेत सा गुणानां समितिः समूहस्तदनुष्ठानं मिश्रगुणकार्यमित्यर्थः ॥ ८ ॥ व्यवहारस्य सन्निपातमूलकत्वेऽयं सात्त्विक इत्यादि विविच्य ज्ञानं व्यवहारो वा कथमित्यत आह ॥ पुरुषमिति । शमादिभिर्युक्तं पुरुषं सत्त्वे संयुक्तं सत्त्वगुण संयुक्तमनुमायादिति योज्यं ॥ ९ ॥ सत्त्वप्रकृतिं सत्त्वस्वभावं ॥ १० ॥ आशिषः संपद आशास्य मनस्याभिसधाय । हिंसा माशास्य यो यजेत तं तामसं विद्यात् ॥ ११ ॥ गुणा उक्तवक्ष्यमाणविशेषापादकतया रांति जीवस्येत्यर्थः। कीदृशाः । भूतानां पंचानां कार्यं यच्चित्तं तत्र जायंते व्यज्यंत इति चित्तजाः । यैर्गुणैः सज्जमानो जीवो निबद्ध्यते गुणा जीवस्यैव न म इत्यन्वयः ॥ १२ ॥ भास्वरमित्यादि सत्त्वगुणविशेषणं । इतरौ रजोगुणतमोगुणौ ॥ १३ ॥ यदा संगं संगकारि । भेदाभेदकारि चलं चांचल्यकारि रजस्तमःसत्त्वं जयेदित्यन्वयः । यदा मूढं मौढ्यापादकं तमो रजःसत्त्वं जयेदित्यर्थः । आशयाऽतितृष्णया ॥ १४ ॥ १५ ॥ देहेऽभयमसंगं संगशून्यं मनो भवतीत्यर्थः । तत्तदा मत्पदं मत्सन्निधानपात्रं ॥ १६ ॥ यदा क्रियया विकुर्वन् भवति । आधीरनिवृत्तिरित्यत्राधीरिति पदं । मनोव्यथेत्यर्थः । अनिवृत्तिरनानंदः । यदा मनो भ्रांतं भ्रांतियुक्तं तदैतैर्गुणै रजो निशामय । रजोगुणानुमानं कुर्वित्यर्थः ॥ १७॥ यदा चित्तं सीदत्सत् विलीयेत यदा च मनश्चेतसो ग्रहणे निग्रहेऽक्षम सत् नष्ठ भवति। यदा तमो ज्ञानं ग्लानिर्म्लानता च भवति॥ १८ ॥ १९ ॥ तुरीयं त्रिषु त्रिभिर्गुणैर्जागरणादिभिर्ऽसंगतमसंबद्धं ॥ २० ॥ आब्रह्मणः सत्यलोकपर्यंतं । आमुख्यान्मुख्यांधंतमःपर्यंतं ॥ २१ ॥ निर्गुणा मां यांतीत्यन्यथाप्रतीतानिरासाय प्रमाणेनार्थमाह ॥ नैर्गुण्येति । मोक्षेत्यर्थः । तथा च निर्गुणा मोक्षसाधनानुष्ठातारो मामेव यांतीत्यर्थः ॥ २२ ॥ निष्फलं फलकामनां विहाय मदर्पणमित्यर्थः ॥ हिंसाप्रायादि प्रायो हिंसादियुक्तमित्यर्थः ॥ २३ ॥ केवल ज्ञानं सात्त्विकं वैकल्पिकं ज्ञानमिदमदो वेति संदेहरूपं ज्ञानं राजसं । प्राकृतं ज्ञानं । मिथ्याज्ञानमिति यावत् । मन्निष्ठं ज्ञानं निर्गुणं मोक्षसाधनमित्यर्थः । अत्र केवलं ज्ञानं नाम किं । मन्निष्ठं ज्ञानं किमित्यतः प्रमाणेन विविच्य दर्शयति ॥ यथेति । स्वेन यच्छास्त्रं श्रुतमस्ति तदुक्तप्रकारेणैवोहापोहं विना यज्ज्ञानं तत्केवलं ज्ञानमुच्यत इत्यर्थः । मन्निष्ठमित्युक्तहरिविषयकज्ञानस्वरूपमाह ॥ स्वदृष्टेति । स्वेन यद्वगादिशास्त्रं दृष्टं तदानुकूल्यात्तदविरोधेनैतदाश्रयात्स्वदृष्टशास्त्रोक्तन्यायमाश्रित्यादृष्टानामपि गुणानां हरौ भावं

सद्भावं विनिश्चित्य यथावत्सर्वशास्त्रार्थानुसधानं हरिसंश्रय ज्ञानमुच्यत इत्यर्थः । मदुक्तशास्त्रेष्वितरशास्त्रेष्वपि हरिगुणा एतन्न्यायेनैव प्रतिपादिताः संतीत्यूहापोहेन विचारो मन्निष्ठं च ज्ञानं तन्निर्गुणं ज्ञानं मोक्षसाधनं मोक्षसाधनभूतं ज्ञानमित्यर्थः ॥२४॥ सात्त्विकावासो वनं वनवासः । सात्त्विक इति यावत् । एवमुत्तरत्र । मन्निकेतं ममाश्रयभूतं यद्देवालयादि तत्र वासो निर्गुणवासो मोक्षसाधनभूतवास इत्यर्थः ॥ २५ ॥ असंगीकारको विषयासक्तिशून्यः । कर्ता सात्त्विकः । स्मृतिविभ्रष्टः शास्त्रार्थस्मरणशून्यः । मदपाश्रयकारको निर्गुणकारको मोक्षभागी कर्तेत्यर्थः ॥ २६ ॥ मत्सेवायां या श्रद्धा सा निर्गुणा श्रद्धा मोक्षसाधनभूता । ननु सात्त्विकश्रद्धयाऽपि निर्गुणश्रद्धात्वात्कथमेतदित्यतस्तदुभयभेद प्रमाणेनाह ॥ श्रुतेति । तदन्यस्यानुसारेणेति । श्रुतशास्त्राभिन्नस्य स्वभावस्यानुसारेण शास्त्रश्रवणं विना स्वभावत एव या परमात्मनि श्रद्धा सा निर्गुणेत्यर्थः । ननु सात्त्विककारक निर्गुणकारकयोश्च को भेद इत्यत आह ॥ अश्रुत्वाऽपीति । प्रमाणं श्रुत्वा यो वासुदेवैकसंश्रयः स सात्त्विको भागवत इत्यादौ ग्रा ं ॥ २७ ॥ अनायस्तमायासेन क्लेशेनाप्राप्तमक्लिष्टमित्यर्थः । आहार्यमाहारविषयमन्नादीत्यर्थः । आहार एवाहार्यमिति वा । इंद्रियप्रेष्ठमिंद्रियप्रीतिकरमार्तिद च तदशुचि च ॥ २८ ॥ मदपाश्रयं सुखं निर्वाणसुख । किमात्मोत्थ सुखं किं च मदपाश्रयं सुखमित्यतस्तयोर्भेदं प्रमाणेनाह ॥ परोक्षमिति । परोक्षज्ञानमात्मोत्थं सुखं जीवं गमयेत्प्रापयेत् । अपरोक्षेण दर्शनं विष्ण्वाश्रय सुखं गमयेत् । अनेन निर्गुणमित्यस्यापरोक्षज्ञानजन्यं सुखमित्यर्थः। विष्ण्वाश्रयमित्युक्त्या भगवदाश्रितं सुखमस्य भवतीति न मतव्यमित्याह ॥ न त्विति । तर्हि मदपाश्रयमिति विष्ण्वाश्रयत्वं कथमस्य सुखस्योच्यत इत्यत आह ॥ तथैवेति । विष्णोरेव तत्सुख तदाश्रयं सुखं । अपरोक्षज्ञाने । तथा च तद्विषयकापरोक्षज्ञानजन्यत्वात्सुखं तदाश्रयमित्युच्यत इत्यर्थः । नन्वपरोक्षज्ञानेन जाय मानं सुखं मदपाश्रयमिति संगच्छते । परोक्षज्ञानजन्यसुख कथमात्मोत्थं स्यादित्यतस्तदुपादयति ॥ परोक्षेति । परोक्षज्ञानगो विषयः स्वमनोगतो भवत्यत आत्मोत्थपरोक्षतः परमात्मादिरूप विषये ज्ञाने सति पश्चात्स विषयो मनसि लग्नो भवति तेन कृत्वा किंचित्सुख जायते तदात्मोत्थं सुखं । तथा चात्मशब्दो मनोवाची । परोक्षज्ञानविषयविषयकमनोजन्य स ीचस्य भूत तदा त्मोत्थं सुखमित्यर्थो द्रष्टव्यः ॥ २९ ॥ निष्ठा व्रतं त्रैगुण्यात्त्रिगुणकार्यभूताः ॥ ३० ॥ न केवलं पुष्पा

सरस्वतीभ्यामधिष्ठिताः किं त्वित्यत आह ॥ दृष्टमिति। अत्र बुद्धयेत्यनन्वितं बुद्ध्या श्रुतमित्ययोगात्। अतोऽन्वय दर्शयति ॥ दृष्टमिति। तथा च चक्षुषा यदृष्टं श्रोत्रेण यच्छ्रुत बुद्ध्या च यदृष्ट विपयीकृतं तदनु परं ब्रह्म ध्यायेत्। तत्र सर्वत्र हरिः सन्निहितोऽस्तीति ध्यायेदित्यर्थः। ननु निर्गुणज्ञानस्य निर्गुणवासस्य निर्गुणकारकस्य निर्गुणश्रद्धाया निर्गुणसुखस्य च सत्वगुणजन्यत्वात्सात्विक निर्गुणमिति भेदेनोक्तिः कथमित्यत आह ॥ सत्वादिति। व्यवधानं विना साक्षात्। यतो मुक्तिदमतो निर्गुणं प्रोक्तमित्यर्थः। मदपाश्रयं ज्ञानादिकं तु तादृशमिति निर्गुणमित्युच्यत इत्यर्थः। व्यवधानेन परंपरया यन्मुक्तिद तत्सात्विकं प्रोक्त। तादृश च केवलज्ञानादिकमतः सात्विकमित्युच्यत इत्यर्थः ॥ ३१ ॥ चित्तजाश्चित्ते व्यज्यमाना येन पुंसा भक्तियोगेन निर्जिताः स मन्निष्ठो मद्भावाय मद्भावाय। चिदानंदस्वरूपत्वभावाय प्रपद्यते कल्पत इत्यर्थः ॥ ३२ ॥ ३३ ॥ त्रिगुणसंबंधाभावस्यैव मुक्तित्वात्सत्त्वसंबंधोऽपि कदाऽपैतीत्यत आह ॥ सत्त्व चेति। नैरपेक्ष्येण तदादिसाधनजातेन जाता या शांतधीः शांतो हरिः सुखमर्यादाभूमित्वात्तद्विषयिणी या धीस्तद्वान्मदपरोक्षज्ञानवान्सत्त्वं जयतीत्यर्थः। जीवं मां प्राणधारक मां। जीवो विनयिता साक्षीति हरेर्जीव शब्दवाच्यत्वात्। जीवेन जीव शब्दवाच्यभगवत्प्रसादेन। तस्माद्देहमिमं लब्ध्वा ज्ञानविज्ञानसंभव। मयैव ब्रह्मणेत्येव पाठः। ज्ञानविज्ञानसंभवमित्यनंतरं गुणसंगं विनिर्धूयेत्यादिरधिकपाठः श्रीधरकल्पित इत्याहुः। उपसंहरति ॥ तस्मादिति। ज्ञानविज्ञानयोः संभवो यस्मात्स तथोक्तः। तादृशमिमं देह लब्ध्वा मामेव। विज्ञायेति शेषः। विज्ञातेन ब्रह्मणा मयैव पूर्णश्चरितार्थो ना पुरुपो बहिर्विषयेपु नाचरेत्। किं त्वतरे चरेत्। प्रत्यगात्मविषयकेंद्रियैरेव चरेत्। इंद्रियाणि तद्विषयकाण्येव चरेदिति यावत् ॥ ३४ ॥ इति श्रीभागवतटिप्पण्यां पंचविंशोऽध्यायः ॥ ११—२५ ॥ ॥

॥ हरिः ॐ ॥ विषयवैराग्यं मुख्यसाधनमित्येतदितिहासेनास्मिन्नध्याये वक्ति ॥ मल्लक्षणमिति। मां लक्षयति भावयतीति मल्लक्षण। आस्थितोऽनुष्ठातो यः। स इति शेषः। तथा हि। देहे सति भगवज्ज्ञानं नान्यथेति। आत्मस्थं हृदिस्थं। तं मां। दृष्ट्वेति शेपः ॥१॥ जीवन्मुक्तस्य स्थितिप्रकारमाह ॥ गुणेति। अत्रावस्तुत्वोक्त्या मिथ्यात्वप्रतीतिस्तन्निवारणार्थमाह ॥ वस्त्विति। तथा चावस्तुतोऽस्वातंत्र्येण दृश्यमानेषु भगवदिच्छानिर्मितत्वेन मायामात्रेषु गुणेषु तत्कार्यभूतदेहेंद्रियादिषु वर्तमानोऽपि पुमान

परोक्षज्ञान्यवस्तुभिरस्वतंत्रैर्गुणैर्देहकार्यैः कामक्रोधादिभिर्न युज्यते । अभिमानाभावादित्यर्थः ॥ २ ॥ शिश्नोदरे तर्पयंतीति शिश्नोदरतृपस्तेषां तस्यासतः । जात्यैकवचनं । अतो बहुवचनेन प्रस्तुतानामपि तस्येत्येकवचनेन परामर्शो युक्तः ॥ ३ ॥ ऐलो महादेवशापात्सुद्युम्नस्य यदेलात्व प्राप्तं तस्यामिलायां बुधाज्जातः पुरूरवाः ॥४॥५॥ वर्षयामिनी रात्रीरुद्दिश्य यातीं गणनां न वेद ॥६॥ देव्या उर्वश्या आयुःखंडा आयुःशकला आयुरेकदेशाः ॥७॥ तदेव दर्शयाति ॥ नेति । यः सूर्येणाभिनिर्मुक्तो रात्र्यंशः यः सूर्येणाभ्युदितोऽहरंशस्तन्मृषा मुषितोऽहं न वेद । अहानि मृषा वृथा गतानीत्यपि सबंधः ॥ ८ ॥ येन संमोहेनात्मा मदीयदेहो योषिता क्रीडामृगः कृतः ॥ ९ ॥ क्रीडामृगत्वमेव दर्शयति ॥ सपरिच्छदामिति । अस्वादि सोपस्करमित्यर्थः । ईश्वरमैश्वर्ययुक्तमात्मानं देहं हित्वा । तदभिमानं त्यक्त्वेति यावत् ॥ १० ॥ यस्त्रियमन्वगच्छेत्तस्यानुभावादिः कुतः स्यात् । अनुभावस्तत्त्वनिश्चयसामर्थ्यं । तेजो मनोनिग्रहादिसामर्थ्यं । ईशत्वं योगविशेषः । स्वार्थस्य साधन इति शेषः ॥ ११–१३ ॥ आत्मभूर्मनोभवः ॥ १४ ॥ पुंश्चल्या व्यभिचारिण्या । भगवंतं नरनारायणं ॥ १५ ॥ किमेतया वाचेत्यादिसूक्तवाक्येन रज्ज्वामित्यादिभ्रांतरयेत्यर्थः । द्रष्टुरीश्वरस्य स्वरूपाविदुषो मे ममैतया किं सुखं । कुतः । यद्यस्माद्योऽहमजितेंद्रियः ॥ १७ ॥ १७ ॥ सौमनस्यं सौंदर्यं । दुर्गंधयुक्ते सौंदर्याध्यासः । अविद्ययाऽधिष्ठानतत्त्वाज्ञानेन ॥ १८ ॥ प्राणिनां यो देहः पित्रादिरधीन इति नावसीयते न निश्चीयते । भार्याया अपि भोगार्थत्वादधीनत्वं देहस्य । मरणानतरं सत्यां दिश्यग्नेर्न चेच्छ्वगृध्रयोः । आत्मनः स्वस्य ॥ १९ ॥ तुच्छा नीचा । निष्ठाऽवस्था यस्य तस्मिन् ॥ किमित्यत आह ॥ अहो इति ॥ २० ॥ अथाऽपि तस्मात् । कुत इत्यत आह ॥ विपर्येति ॥ २२ ॥ तदुपपादयति ॥ अदृष्टादिति । भावात्पदार्थात् । भावः संस्कारः । एवं दृष्टान्छ्रुतादेव भावाज्जायते । तथा च विपर्येंद्रियसंयोगे पदार्थानुभवजनितसंस्कारेण मनःक्षोभ इति भावः । कामक्रोधमदमत्सरलोभमोहरूपषड्वर्गो विदुषां विद्वद्भिरविश्रभ्योऽविश्वास्यः । विदुषाऽप्यरिषड्वर्गो मया जितोऽस्तीति विश्वासो न कर्तव्य इत्यर्थः । मादृशां मत्सदृशानां मत्सदृशैरविश्रभ्य इति किं वक्तव्यमित्यर्थः ॥२३॥२४॥ उर्वशीलोकं तस्याः शरीरं । आत्मानमात्मनात्यवगम्य ध्यात्वा ॥२५॥ भगवान् आह ॥ तत इति । एतस्य पुरुषस्योक्तिभिः सदुक्तिभिः ॥ २६ ॥ के संत इत्यत आह ॥ सत इति । ताः कथा ये

शृण्वंतीत्यादि । त मयि भक्ति विंदंति । अनतसुखादिरूपे मयि भक्तिमित्यन्वयः ॥ २७—३० ॥ उपाश्रयमाणस्य सेवमानस्य । विभावसुमग्निं ॥ ३१ ॥ ३२ ॥ प्राणं चेष्टाप्रदं । नृणां प्रेत्य वित्त धर्मः । लुप्तोपमेय । तथा च यथा धर्मसाधनीभूतं वित्तं नृणां प्रेत्य मरणानंतरं मरण धर्मसाधनं भवतीति । अर्वाक् मरणात्पूर्वं संसाराद्बिभ्यतोऽरणमाश्रयः ॥ ३३ ॥ अरणत्वमुपपादयति ॥ सत इति । समुच्छ्रितोऽर्को बहिश्चक्षुर्ग्राह्यपदार्थज्ञानं दिशत्येव संतश्चक्षूंसि परापरतत्त्वज्ञानानि दिशंति । अनेन सतां सूर्यापेक्षयाऽपि वैलक्षण्यमुक्तं भवति । अहमेव देवतादिरितियोज्य । ननु कथमेतद्भगवतः कृष्णस्य देवतात्वं कांश्चित्प्रति बांधवत्वं पितृत्वं मातृत्वं च यद्यप्युपपन्नं । तथाऽपि संतोऽहमेवेत्ययुक्तं सद्भिर्भगवतोऽभेदस्य बाधितत्वादित्यतोऽस्य तात्पर्यमाह ॥ भगवतोऽपीति । प्राधान्येनाभेदोक्तिश्च राजाराष्ट्रमित्यादौ द्रष्टेत्याशयः । यदि देवतादिरपि भगवदितर एव विवक्षितस्तदाऽपि प्राधान्याद्देवताप्रभेदोक्तिरिति तात्पर्यं द्रष्टव्यं । नन्वत्रैवमस्तु क्वचित्सदपेक्षयाऽन्यदुत्तमं वस्तु नास्तीत्युच्यते तत्रात्रऽयं भगवदभेद सतां वाच्य एव । तत्समाख्यानादत्रापि तथैवार्थ इत्यतस्तद्वचनार्थोऽप्येवमेवेत्याह ॥ विष्णोश्चेति । सत्प्रधानत्वात्सतां मध्ये प्रधानत्वादित्यर्थः । सतां सकाशात्परमुत्तमं । वेदविदुषो वेदार्थविदुषः । अभेद एव कस्मान्नेत्यतो विरुद्धधर्माधिकरणत्वादित्याह ॥ स हीति ॥ ३४ ॥ स्वोक्तमर्थमितिहासेन संगमयति ॥ चेतसेति । एवं चेतसा । विचार्येति शेषः । उर्वश्या लोके देहे निस्पृहः । आत्मनि हरौ । आ सम्यक् रमणं यस्यासावात्मारामः । तस्मान्मुमुक्षुणा मुक्तसंगेनात्मारामेण भवितव्यमित्याशयः ॥ ३५ ॥ इति श्रीभागवतटिप्पण्यां षड्विंशोऽध्यायः ॥ ११—२६ ॥ ॥

॥हरिः ॐ॥ कर्मानुष्ठानप्रकारं प्रपचयत्यस्मिन्नध्याये । तत्रोद्धवः संक्षिप्योक्तं क्रियायोगं विस्तरतो विविदिषुः पृच्छति ॥ क्रियायोगमित्यादिना । ये सात्त्वताः पचरात्रोक्तप्रकारेण कर्मानुष्ठातारस्ते येन कर्मणा त्वां यथाकथमर्चंति त भगवदाराधनरूप क्रियायोगं समाचक्ष्व वदेत्यन्वयः ॥ १ ॥ नन्वन्यद्विहायेदमेव कस्मात्पृच्छसीत्यत आह ॥ एतदिति । एतद्भवदर्चनं निःश्रेयसं श्रेयःसाधनं वदंति । के ते मुनय इत्यत आह ॥ नारद इत्यादिना । अंगिरसः सुतः । आचार्यो बृहस्पतिरित्यन्वयः ॥ २ ॥ इतोऽपीदमेव श्रोतव्यं नान्यदित्याह ॥ निःसृतमिति । ते मुखांभोजान्निःसृतं क्रियायोगं भगवानजो ब्रह्मा भृगुमुख्येभ्यः पुत्रेभ्यो

यथाऽऽह तं प्रकार वदेत्यर्थः । भवश्चेति च शब्दान्वयः ॥ ३ ॥ इतोऽपीदमेव वाच्यमित्याह ॥ एतदिति । श्रेयसामुत्तमं । एतत्सर्वेषां संमत ॥ ४ ॥ ५ ॥ क्रियायोग वदेत्युक्तं । तत्र सर्वोऽपि क्रियायोगो वक्तुं न शक्यते । गहना कर्मणो गतिरित्युक्तत्वेनापरिच्छिन्नत्वात् । अपि तर्हि संक्षेपेण वक्ष्य इत्याशयेनाह ॥ भगवानिति । अनतपारस्य न विद्यतेंऽतपारौ यस्य स तस्य कर्मकांडस्यांतो न हि। अथाऽपि संक्षिप्तं संक्षेपेणोक्तं क्रियायोग यथावद्याथार्थ्येनानुपूर्वशो यथाक्रमेण वर्णयिष्यामीत्यन्वयः ॥६॥ मे मम मखो मत्पूजालक्षणमखो वैदिको वेदोक्तज्योतिष्टोमादिकर्माधिकारिविषयः । तांत्रिकः तंत्रोक्तपुष्पांजल्याद्याधिकारविषयो वैदिकतांत्रिकोक्तप्रकारानुष्ठात्रधिकारविषयः । अथवा मिश्रःस्त्रीशूद्रादिविषयो नामसंकीर्तनादिरिति त्रिविध इत्यर्थः । तत्र त्रयाणां मध्ये ईप्सितेन विधिना विधानेन मां समर्चयेत् ॥ ७ ॥ तदेव विवृणोति ॥ यथेति । पुरुषो यथा स्वनिगमेनोक्त स्वशाखाविहितं तथा द्विजत्वं प्राप्योपनयनं प्राप्य मां यथाकथ यजेत तं प्रकारं मे सकाशान्निबोधेत्यन्वयः ॥ ८ ॥ हृदये वा जले वाऽपि चले वा केवलस्थल इत्युक्तिं हृादि कृत्वाऽऽह ॥ अर्चायामिति । गुरुभूतं मामर्चयेदित्यन्वयः ॥ ९ ॥ अर्चनांगभूतं किंचिदाह ॥ पूर्वमिति । अंगशुद्धये देहशुद्धये उभयैर्वैदिकैस्तांत्रिकैरुद्धृतासीत्यादिमंत्रैर्मृद्ग्रहणादिना स्नान प्रकुर्वीतेत्यन्वयः ॥ १० ॥ वेदतंत्रोदितानि यानि संध्योपास्त्यादिकर्माणि तैर्मम पूजां प्रकल्पयेत् । किमर्थमेवं कल्पनमित्यत आह ॥ सम्यगिति । सम्यक् मम पूजात्वेन संकल्पः कर्मपावनः कर्मशुद्धिकर इत्यर्थः ॥ ११ ॥ अर्चायामित्युक्तं प्रतिमाभेदमाह ॥ शैलेति । शैली शिलामयी । दारुमयी दारुनिर्मिता । लौही लोहनिर्मिता । लेप्या औषधिरससंलिप्ता शिला तन्मयी । लेख्या चित्रादि । सैकता सिकताकृता । मनोमयी ध्यानकाले चित्तप्रतिबिंबिताकृतिः । मणिमयी स्फटिकादिमणिमयीत्येवं प्रतिमाऽष्टविधेत्यर्थः ॥ १२ ॥ स्थिराचलप्रतिमामुक्त्वा पुनः प्रतिमा द्विविधाऽस्तीत्याह ॥ चलाचलेति । जीवमंदिर देहं । इदं चलांतर्भूतामिति दर्शयितुं पृथगुक्तिः । चलं देहादिकं । अचलमस्थिराचलं गृहे विद्यमानप्रतिमादि । स्थिरायामर्चने शैलाद्यचलप्रतिमायामुद्वासावाहने उपसंहारावाहने ॥ १३ ॥ अस्थिरायां शमादिप्रतिमायां विकल्पः । उद्वासावाहनयोरिति शेषः । हृद्यमुद्रासावाहनरूपं । अन्यत्र लेख्यादिप्रतिमायां परिमार्जनं तुलस्याः सेकादिः ॥ १४ ॥ यथालब्धैः पंचरात्रादिषु प्रसिद्धैर्द्रव्यैः । अमायिनोऽस्य भक्त्या भावेन ध्यानेन

च हृदि मद्यागो विहित इत्यर्थः ॥ १५ ॥ प्रेष्ठं प्रीतिजनकं । पुनः कस्या अर्चायाः केन द्रव्येण पूजा कार्येत्यत आह ॥ स्थंडिल इति । तत्त्वविन्यासस्तेन पूजा तत्रेत्यर्थः । वन्हावाज्यप्लुतं हविस्तेन पूजा तत्रेत्यर्थः ॥ १६ ॥ पुष्पादिभिरभ्यर्हणं । किं पुनर्मम भक्तेन श्रद्धयोपहृतं वार्यपि प्रेष्ठमित्यर्थः ॥ १७ ॥ सुमनसः पुष्पाणि ॥ सम्भृतेति । पूर्णेत्यर्थः ॥ १६ ॥ प्रागग्रदर्भैः कल्पितासनः पुमान् ॥ १८ ॥ अथ संमुखो देवतासंमुखः सन् प्रागुदग्वासीनोऽर्चायामर्चयेत् । स्वयं च कीदृशः कीदृशीमर्चामर्चेदित्यत आह ॥ कृतेति ॥ १९ ॥ कृतषडंगन्यासोऽभिमृजेदभिमंत्रयेत् । कलश कलशपात्रं । प्रोक्षणीयं पुष्पादि पुष्पादिस्थानपात्रं । तदद्भिः प्रोक्षणीयपात्रस्थोदकैर्यजनं वेदिद्रव्याणि गधादीनि ॥ २० ॥ प्रोक्ष्य सेक कृत्वाऽद्भिरतैस्तैर्द्रव्यैश्च पूणानि त्रीणि पात्राणि साधयेत् । किमर्थमित्यत उक्तं । पाद्यादीति । दैशिकः पूजकः ॥ २१ ॥ गायत्र्या मंत्रेण हृदादिस्थाने चाभिमत्रयेदित्यर्थः । ध्यानप्रकारमाह ॥ पिंड इति । वाय्वग्निसंशुद्धे दहनशोषणेन सशुद्धेऽपि पिंडे देहे ॥ २२ ॥ नन्वण्वीं जीवकलां ध्यायेन्नादांते सिद्धभावितामित्यत्र जीवकलामित्यनेन जीवस्वरूपभूतां कलामिति जीवस्य ध्यानमुच्यतेऽतोऽत्राभिप्रेतमर्थमाह ॥ जीव इति । नात्र जीवश्चासौ कला चेति कर्मधारयः । किंतु जीवः कला प्रतिबिंबा यस्याः सा जीवकलेति बहुव्रीहिः । तेन भगवन्मूर्तिरेव ध्येयत्वेनाभिप्रेतेत्युक्तं भवति । उक्तार्थे नियामकं प्रमाणमाह ॥ हृदीति । नादांत इति पदं व्याचष्ट ॥ शब्दैरिति । तयाऽऽत्मभूतया । पिंडे व्याप्ते । संपद्य तन्मय इत्यत्रात्मभूतयेत्यनेन जीवस्वरूपभूतया जीवकलयेत्युच्यत इति भातीत्यतोऽत्राभिप्रेतमर्थं प्रमाणेनाह ॥ व्याप्त इति । व्याप्त इत्यात्मशब्दार्थनिरूपणं । तेनात्मा व्याप्ता भूता विद्यमाना चेत्यात्मभूत इत्युक्तं भवति । जीवस्येत्यादिना तन्मय इति व्याख्यानं । आत्मभूतया तया संपद्य तन्मयो मामावाह्यार्चादिषु स्थाप्यार्चादिषु न्यस्तांगं विन्यस्तांगं मां पूजयदित्यन्वयस्य जातत्वात्पिंडेति व्याप्त इत्येतदनुपयुक्तमित्याशंक्य प्रमाणेनैव तदभिप्रायमाह ॥ व्याप्तोऽपीति । सर्वगतत्वतो देहेऽपि व्याप्तो भगवान्विष्णुर्यद्यपि । तथाऽपि भक्तस्य फलदो यस्मात्तेन तस्माद्देहे पुनर्व्याप्तिकृदिति योज्यं । एवं चात्मभूतया तयेत्युक्त्यैव देहेऽपि व्याप्तिर्लब्धा सर्वगतत्वाद्विष्णोः । तथाऽपि पिंडेति व्याप्त इति पुनर्व्याप्तिनिरूपणं देहे व्याप्तः सन् भक्तस्य फलं ददातीति सूचनार्थं पुनर्वचनमिति भावः ॥ तथा चायमर्थः ॥ वाय्वग्निसंशुद्धेऽपि पिंडे देहे हृत्पद्मस्थां परमामण्वीं गुरुमां मम

जीवकलां जीवः कला यस्याः सा जीवकला तां बिंबभूतां नादांते नादानां शब्दानामतेऽवसाने विद्यमानां साकल्येनाशब्दवाच्यां सिद्धैर्ज्ञानिभिर्भाविताम्रुपासितामेतादृशीं मम कलां ध्यायेत् । पश्चादात्मभूतया व्याप्तो भूत्वा नित्यं विद्यमाना या जीवकला तया भगवन्मूर्त्या व्याप्ते पिंडे देहे सपद्य सम्यक् प्रतिपत्तिं कृत्वा तन्मयः ॥ २३ ॥ एव ध्यानेन भगवत्प्रधानो भूत्वाऽर्चादिष्वावाह्य स्थाप्य न्यस्तांगं विन्यस्तांगं मां प्रपूजयेदिति ॥ २४ ॥ धर्मादिभिर्विमलादिभिश्चासनं पीठं कल्पयित्वा तत्रासने कर्णिकाकेसरोज्वलमष्टदलं पद्मं कल्पयित्वा तत्र मां वैदिकतांत्रिको वा । अधिकारीति शेषः ॥ २५ ॥ किमर्थमित्यत उक्तं उभाभ्यां वेदतंत्रोक्तमंत्राभ्यामुभयफलसिद्धये वेदतंत्रोक्तफलसिद्ध्यर्थं मह्य मम प्रीत्यर्थं पूजयेदित्यन्वयः । पुनः कान्पूजयेदित्यत आह ॥ सुदर्शनमिति ॥ २६—२८ ॥ स्वे स्वे स्थाने देवताभिमुखान् एतान्प्रोक्षणादिभिः सेकादिभिः पूजयेदित्यन्वयः ॥ २९ ॥ तानेव मंत्रान्दर्शयति ॥ स्वस्येति । अत्र स्वस्येत्यनन्वित प्रतीयते । नीराजन शब्दस्याप्यर्थो न प्रतीयतेऽतो व्याचष्टे ॥ स्वस्येत्यादिना । रंजयेत्प्रतिपादयेत् । मंडलमध्यायः । तथा च स्वस्यानुवाकेन विष्णुसूक्तेन । धर्मानुवाकेन धर्मसूक्तेन महापुरुषविद्यया जितंत इति स्तोत्रेण ॥ ३० ॥ पौरुषेण पुरुषसूक्तेन धामसूक्तेन समुद्रादूर्मिरिति सूक्तेन तथा वक्तव्ये सूक्तांत्यधामं ते विश्वमिति ऋग्ग्रहणं सर्वमपि सूक्तमुपलक्षयति । नीराजनादिभिः पवमानसूक्तादिभिः स्नापयेदित्यर्थः ॥ ३१ ॥ सप्रेमं स्नेहपूर्व । भक्तिपूर्वमिति यावत् । यथोचितैर्गंधमाल्यादिभिरित्यन्वयः ॥ ३२ ॥ उपहार्याण्युपायनानि । मे दद्यादर्चकः श्रद्धयेत्यन्वयः ॥ ३३ ॥ सति वित्ते सति ।। दरिद्रस्तु किं कुर्यादित्यन्वयः ॥ ३४ ॥ एवमन्नादीनि पर्वाणि पर्वकाले प्रत्यहं च स्युरित्यर्थः । अनुयागप्रकार माह ॥ विधिनेति । मेखलावर्तवेदिभिः सह विधिना विहिते कुंडेऽग्निमाधायोदितं ज्वलितमग्निं परितः समूहत्पाणिना स्थलशुद्धिं कुर्यात् । अथ स्थलशुद्धिं कृत्वा परिस्तीर्य दर्भान्प्रक्षिप्य यथाविध्यग्निमन्वाधाय पर्युक्षेदुदकेन सेकं कुर्यात् ॥ ३५ ॥ ३६ ॥ प्रोक्षणीयानि सेक्यानि द्रव्याणि प्रोक्ष्य सेकं कृत्वा पश्चादग्नौ मामावाहयेत् । कीदृशं मामित्यत उक्तं ॥ तप्तेत्यादिना । प्रसन्नं सदृशं ॥ ३७ ॥ किंजल्कं केसरः ॥ ३८ ॥ अभ्यर्च्य षोडशोपचारपूजां कृत्वा हविषाभियुतानि दारूणि सर्पिषा मिश्रिताः समिधः प्राज्य हुत्वाऽऽघारमाघार्यसमिधा आज्यभागौ दत्वा कोणात्कोणं प्रति हुत्वाऽऽज्यप्लुतं हविरन्नादिद्रव्यं मूलमंत्रेण षोडश

जुहुयात् । आर्चाविधानतः पूजाविधानतो धर्मादिमंत्रैर्धर्मादिभ्यश्च यथान्यायं हविर्जुहुयादित्यन्वयः । पुनः स्विष्टकृतं बुधो जुहुयात् ॥ ४० ॥ एवमभ्यर्च्याथ नमस्कृत्य पुनर्धूपं दत्वा पार्षदेभ्यः सनकादिभ्यो बलिं हरेदित्यर्थः ॥ ४१ ॥ उन्छेपमुच्छिष्टं । सुरभिमन्मुखवासं तांबूलाद्यं च दत्वाऽथानंतरं चामराद्युपचारैर्मामर्हयेदित्यन्वयः ॥ ४२ ॥ नन्नूपगायन् गृणन्नित्यनयोर्भेदाप्रतीते-रभिनयन्नित्यस्य प्रकृतोपयुक्ततयाऽर्थाप्रतीतेश्च यथावद्व्याचष्टे ॥ ममेति । कीर्तयित्वेत्यनेन गृणन्निति व्याख्यातं । अभीत्यस्याभित इत्यर्थ इति दर्शितं । पदार्थमुक्त्वाभिप्रायमाह ॥ सर्वेषा प्रकाशयन्निति । अभितः सर्वेपामित्यर्थः । नयन्नित्यस्य प्रकाशयन्नि-त्यर्थभावेन प्रकाशयन्नित्युक्तं । एवं च मम कर्माणि प्रकाशयन्निति अभिनयन्नित्यस्यार्थ उक्तः स्यात् । न च तद्युक्तं । तथात्वे मत्कथाः श्रावयन्नित्यनेन पौनरुक्त्यमित्याशंक्य तत्राभिप्रेतमर्थमाह ॥ मत्कथा इति । तथा चाभिनय शब्दार्थं दर्शयितुं मत्कथा श्रावयन्नित्युक्तमतो न पौनरुक्त्यमिति भावः । तथा च मम कर्माण्युपगायन् गायनं कुर्वन् गृणन्कीर्तयन्मुहुरभिनयन् । तदेव विवृ-णोति ॥ मत्कथाः श्रावयन्निति । स्वयमपि शृण्वन् सर्वमुहूर्तांश्च क्षणलवांश्च भवेदित्यर्थः । सर्वमुहुर्तेषु सर्वक्षणेषु चैवमेव हरिकथा-श्रवणादिना कालक्रमणं कुर्यादिति भावः ॥ ४३ ॥ प्राकृतैर्विष्णुस्तुतिरूपादिभिः ॥ ४४ ॥ परस्परं बद्धाभ्यां बाहुभ्यां शिरो मत्पादयोः कृत्वा मत्प्रणमेदित्यन्वयः । मृत्युग्रहः ससाररूपः ॥ ४५ ॥ मया दत्तां पश्चात्प्रसन्नेन मया दत्तां शेषां निर्माल्यं । उद्वास्यमुपसंहार्यं । ज्योतिषि प्रतिमांतर्गते विद्यमानं यज्ज्योतिस्तत् । उद्वासयेदुपसंहारयेत् ॥ ४६ ॥ अभीष्टप्रतिमायां पूजा कार्येत्याह ॥ अर्चादिष्विति । यत्र येष्वर्चादिषु यथा श्रद्धा तत्र तथा मां पूजयेदित्यन्वयः ॥४७॥ कुत इत्यत आह ॥ सर्वभूतेष्विति । यत इति शेषः । सर्वभूतेष्वात्मनि च समास्थितो यतोऽहं सर्वात्मेत्यर्थः । वैदिकैर्वेदोक्तैस्तांत्रिकैस्तंत्रोक्तैः ॥ ४८ ॥ अर्चानुभा-वतः पूजानुभावतः । मंदिरं देवालयं कारयेत् ॥ ४९ ॥ रम्याणि मनोहराणि पुष्पोद्यानानि कारयेत् । तत्र पुष्पोद्यानेषूत्सवा-श्रितां प्रत्युत्सवं पूजां कुर्यात् । कुत इत्यत उक्तं ॥ पूजादीनामिति । उत्तरत्र प्रवाहरूपेण पूजादीनां प्रवर्तनार्थं । अथ महापर्वसु । अन्वहं च पूजां कुर्यादित्यर्थः ॥ ५० ॥ क्षेत्रेति । देवस्येति शेषः । प्रतिष्ठाग्रहकरणपूजादीनां फलतारतम्यमाह ॥ प्रतिष्ठयेति । अत्र

योजयति ॥ नैरपेक्ष्येणेति । भक्तियोगेनैवेत्यनेन मामेवेत्यवधारणं । भक्तियोगेत्यनेन संबध्यत इत्युक्तं भवति । ननु मत्साम्यतामियादित्युक्तं । तत्र साम्यं नाम भगवज्ज्ञानानंदादिना सादृश्यं तेन भगवत्स्वरूपभूतसुखादिसमानसुखादिप्राप्तिरित्युच्यत इति भात्यतः प्रमाणेन तदभिप्रायमाह ॥ निर्दुःखत्वमिति ॥ तादृशेति । भगवत्स्वरूपभूतसुखात्मता नेत्यर्थः । कुत इत्यत उक्तं ॥ सर्वोत्तम इति । कस्यचित्केनचित् । तथा चात्र दुःखाभावेनैव साम्यमभिप्रेत्य तत्साम्यतामियादित्युक्तमिति भावः । ननु सद्मना भुवनत्रयमित्युक्तं तन्न । भुवनत्रयप्राप्तिर्हींद्रस्यैव । तेन यो भगवतः सद्म करोति स इंद्रो भवतीत्युक्तं स्यात् । न चैतत्सर्वेषां युक्तं । अयोग्यानामिंद्रत्वप्राप्तेरयोगादित्याशंकायां प्रमाणेनैव तदभिप्रायमाह ॥ आधिपत्यामिति । इद्रत्वप्राप्तियोग्यानां त्रिलोकाधिपत्य नामेंद्रतैव भवति । अयोग्यानां त्रिलोकाधिपत्यं नाम पूज्यत्वमात्रं भवतीति ध्येयं । तत्पूज्यत्वं । उद्रिक्तयोत्कृष्टया । एवं च प्रतिष्ठया मूर्तिप्रतिष्ठया भुवनत्रयं । अयोग्यश्चेत्परया भक्त्या भुवनत्रये पूज्यत्वं । पूजादिना । ततोऽप्युद्रिक्तया भक्त्या पूजादिना । तत्पूर्वकपूजादिनेति यावत् । त्रिभिः प्रतिष्ठासद्मपूजादिभिर्नैरपेक्ष्येण भक्तियुक्तैर्मत्साम्यतामियात् । नैरपेक्ष्येण भक्तियोगेनैव मां विंदंति मत्सायुज्यं विंदंतीत्यर्थः ॥ ५१ ॥ ५२ ॥ फलमाह ॥ स भक्तियोगमिति । न केवलं प्रतिमादिपूजाकर्तुरुक्तं फलं । किंतु तत्साहायकर्तॄणामपि यथायोग्यं भवतीत्याह ॥ कर्तुरिति । कर्मणां कर्तुर्यत्फलमुक्तमास्ति तद्भागिन एते सारथ्यादयो भवंति । तथा सारथेः सहकारिणो यत्फलमुक्तमस्ति तद्भागिन एते कर्तादयो भवंति । तथा हेतोः कारणस्य यत्फलमुक्तमास्ति तद्भागिन इतरे भवंति । तथाऽनुमोदितुर्यत्फलमुक्तमास्ति तद्भागिनोऽपरे भवतीति योज्य । ननु सर्वेषां किं सामान्येन फलं नेत्याह ॥ प्रेत्येति । मरणानतर भूयसि महति मुख्यकर्तरि तत्फल भूयो महद्भवतीत्यर्थः ॥ ५३ ॥ ५४ ॥ इति श्रीभागवतटिप्पण्यां सप्तविंशोऽध्यायः ॥ ११—२७ ॥

॥ हरिः ॐ ॥ परस्वभावकर्माणि न प्रशंसेन्न गर्हयेत् । विश्वमेकात्मकं पश्यन्नित्यत्र सर्वस्यैकत्वात्कस्यापि प्रशसा निंदा न कार्येति विरुद्ध प्रतीयते । पर शब्दस्याप्यर्थो न ज्ञायतेऽतः प्रमाणेनैव तदभिप्रायमाह ॥ नेति । अनेन पर शब्दो निंद्यप्रशंस्यपर इति सूचितं भवति । द्वितीयार्धेन द्वितीयश्लोको विवृतः । ननु यथा निंद्यप्रशंसा न कार्या तथा तन्निंदाऽपि न कार्या किं । तथा प्रशंस्यनिंदा यथा न कार्या तथा तत्प्रशंसाऽपि न कार्या किं नेत्याह ॥ य इति । तद्वत्प्रशंस्यनिंदको निंद्यप्रशसकश्च

यथाऽधो याति तद्वदित्यर्थः । कुत इत्यत आह ॥ यत इति । उदासको निंद्ये निंदादौ प्रशंस्ये प्रशंसादाविति शेषः । तथा चानर्थकफलश्रवणादुदासकस्यावश्य तत्कार्यमिति भावः । अभेदनिरासायार्थमाह ॥ प्रकृत्येति । तेन सहयोगे तृतीयेत्युक्तं भवति । ननु निंद्ये स्वभावभूतं निंद्यत्वादिकं प्रशंस्ये च स्वभावभूत प्रशंसादिकं कथं ज्ञेयमित्याशंकापरिहाराय प्रवृत्तो विश्वमेकात्मक-मित्यर्थः । तेन कथं सा शंका परिहृतेत्यतस्तदभिप्रायमाह ॥ तथेति । इदं सर्वं जगत्प्रकृत्यादिभिव्यप्तिमिति पश्यत एवेत्यर्थः । यथार्थज्ञानं निंद्ये निंद्यत्वप्रकारकं स्तुत्ये स्तुत्यत्वप्रकारकं । निंद्यान्निवर्तेति । यद्वा । ननु निंद्यप्रशंसा न कार्येत्युक्तं तदयुक्तं । तेन प्रशंसाकारणीभूतधनादेर्दीयमानत्वेन स्तोत्रस्य कर्तव्यत्वात् । तथा स्तुत्यनिंदा न कार्येत्युक्तं तदयुक्तं । तादृशकार्ये क्रियमाणेऽ-वश्यं तस्य निंद्यत्वादित्यतो निंदा वा प्रशंसा वा न कार्या । कुतः । ईश्वरस्य सर्वत्र व्याप्तत्वेन तत्र तत्र स्थित्वा तथा कर्तव्य-करणादित्याशयेनाह ॥ विश्वमिति । यथार्थज्ञान निंद्यस्य प्रशंसात्वाभावप्रकारक प्रशंस्यनिंद्यत्वाभावप्रकारकं ज्ञानं । मूलार्थे प्रमाण-माह ॥ निंद्यान्निवर्ततेति । अन्यथेति मत्वाऽपि निंद्यादनिवर्तते । कोऽर्थो निंदाकरणे मौक्तानंदन्हासः स्यान् । तस्मादिदं मत्वा निंद्यान्निवर्तेति वाक्यशेषः । गुणान्कुर्यात् । पूर्णगुणार्थमिति शेषः । ज्ञानी त्वकर्तृत्वमानादीशकर्तृत्वनिश्चयात्कारणात् । अनित्या गुणा मे न स्युरिति मत्वा तथा दोषाः कथंचन नैव स्युरिति मत्वा शुभं कुर्यात् । नन्वशुभान्निवर्तन किं । अशुभकरणजनित-दोषापनुत्तये इत्याशंकायां नेत्याह ॥ न त्विति । किंतु मौक्तिकानंदन्हासो भविष्यतीति बुद्ध्याऽशुभान्निवर्तेत इत्यन्वयः ॥ ततश्चायं श्लोकार्थः ॥ पूर्वं कर्मयोग उक्तस्तत्प्रसंगादन्यदपि प्रमेयं शिक्षयति ॥ परेति । अत्र पर शब्दो निंद्यप्रशंस्यपरः । परस्वभावकर्माणि निंद्यस्वभावानुसारेण कृतकर्माणि न प्रशंसेत् । तथा पर उत्तमः । प्रशंस्य इति यावत् । तत्स्वभावानुसारि-कर्माणि न गर्हयेत् । कुतः । यः परस्वभावकर्माणि निंद्यस्वभावानुसारिकर्माणि न निंदयति । तथा प्रशंस्यस्वभावानुसारिकर्माणि न प्रशंसति स आशु स्थानाद्भ्रश्यतेऽधो याति । कुत इत्यत उक्तं ॥ असत्येति । असत्यभाषित्वप्राप्तेरित्यर्थः । कथं । प्रशंस्ये निंदाया अभावात्तत्करणेऽसत्यभाषित्वं । तथा निंद्ये प्रशंस्याया अभावात्तत्करणेऽसत्यभाषित्वं प्राप्तमेव । तथा च नानृतात्पातकं परमित्युक्तेरनृतभाषणेनाधः पातो भवतीति कृत्वा निंद्यप्रशंसा प्रशंस्यनिंदा न कार्यैव । ननु स्यादेतत । यदिपरस्वभावभूतं

निंद्यत्वं प्रशंस्यत्वं वा ज्ञातुं शक्यं स्यात्तदेव कथं ज्ञेयमित्यत उक्तं ॥ विश्वमिति । प्रकृत्या सरस्वत्या पुरुषेण ब्रह्मणा सह स्थितं विश्वमेकेन प्रधानेन परमात्मनाऽऽत्मकं व्याप्तं पश्यन् यस्तस्य यथार्थज्ञानं निंद्ये निंद्यप्रकारकं प्रशंस्ये प्रशंस्यत्वप्रकारकं ज्ञानं भवतीति । तथा च सर्वं जगत्प्रकृतिपुरुषपरमात्मभिर्व्याप्तं तैः प्रेरितं सत् । स्वस्य योग्यतानुसारेण कर्मकरोतीत्येव ज्ञानवतो हरिप्रसादान्निंद्ये निंद्यत्वप्रकारकं प्रशंस्ये प्रशंस्यत्वप्रकारकं ज्ञानमपि भवतीति ॥ १ ॥ २ ॥ ननु सर्वजगत्तेन व्याप्तमित्युक्तं तत्कुत इति चेन्न । सर्वस्य तदधीनत्वात् । तदपि कुत इत्यतः सुषुप्त्याद्यवस्थानां तदधीनत्वेन तद्दृष्टांतेनावस्थात्वादिति हेतुना सर्वस्येशाधीनत्वं सिद्ध्यतीत्याशयेन स्वप्नमरणनिद्राऽवस्थानामीश्वराधीनत्वमस्तीत्याह ॥ तैजस इति । एतत्प्रकृतासगतत्वाद्दुर्गमार्थत्वाच्च व्याचष्टे ॥ तैजस इति । परात्परमात्मप्रेरणयेत्यर्थः । अतो विष्णोर्वशे सर्वमित्यनेन प्रकृतोपयोगो दर्शितः । ननु निद्रयेंद्रियाणामुपरमे सति मृत्यादेरभावात्कथमेतदित्यत आह ॥ निद्रा चेति । मृतिकालगा मरणकाले विद्यमाना कालनिद्रेत्यर्थः । तथा च निद्रा द्विविधा । नित्यनिद्रा सुनिद्रा चेति । तभ्यां यथाक्रमं मायां मृतिं प्राप्नोतीत्यर्थः । मायां प्राप्नोतीत्युक्त । तत्रानिर्वचनीयाविद्या मायेति प्रतीयतेऽतो माया शब्दार्थं प्रमाणेनाह ॥ मनोमात्रस्वरूपत्वादिति । मनोगतवासनामयत्वादित्यर्थः । तद्धि नानार्थदमित्येतद्व्याचष्टे ॥ तथेति । स्वप्नावस्थायामीश्वरप्रेरितं मन एव स्वनिष्ठवासनाद्वारा गजतुरगादिनानार्थदमित्यर्थः । तर्हि तदानीमिंद्रियाणामुपरतत्वात्कथं स्वाप्नार्थप्रतीतिरित्यत आह ॥ मनसा चेति । विषयाः स्वप्नार्थाः ॥ ततश्चेय योजना । तैजसे तैजसाहंकारकार्ये इंद्रियगणे परात्परमात्मप्रेरणया जायमाना या निद्रा नित्यनिद्रा तयाऽवश्यमापन्ने उपरते सति पिंडस्थो देहस्थो जीवो नष्टचेतनो ज्ञानरहितो भवति । यदा ज्ञानशून्यो भवति तदा मायां वासनामयं स्वाप्नार्थं । स्वप्नमिति यावत् । पश्यति । तदेव विवृणोति ॥ तद्धीति । मनः स्वनिष्ठसंस्कारद्वारा ईश्वरप्रेरणया गजतुरगादिनानार्थप्रदं हि । अतोयुक्तमुक्तं । तथा निद्रया परमात्मनः सकाशादुपजायमानयेंद्रियगणे उपरते सति पिंडस्थो नष्टचेतनः सन् मृत्युं प्राप्नोतीति । अत्रेश्वरः सर्वेंद्रियोपरमं कृत्वा निद्रां ददाति । पश्चात्तन्मध्ये वैकारिकत्वादेकं मनोविहाय तैजससर्वेंद्रियोपरमं कृत्वा स्वप्नं ददाति । तत्र च मनसो नानाविधार्थपरिणामशक्तिं ददातीत्येतदवस्थात्रयस्य भगवदधीनत्वं प्राप्तमिति ध्येयं ॥ ३ ॥ ननु यदुक्तं विनिंद्ये निद्रा कार्या

प्रशंस्ये प्रशंसा कार्येति तदयुक्तं । निंद्यादीनामपि प्रशंसनीयशुभगुणसद्भावादित्यतः । सत्य । सर्वदाऽशुभरूपत्वेन तस्याल्पत्वाद्विद्यमानमप्यविद्यमानप्रायं । ततश्च निंद्यत्वादिकं संभवतीत्याह ॥ कि भद्रमिति । अत्र मिथ्यात्वप्रतीति-निरासाय व्याचष्टे ॥ एकमिति । अद्वैतामेत्यर्थः । ज्ञानार्थयोरैक्यादशुभ द्वैतमित्युच्यते । अर्थापेक्षयाऽन्यथात्वादित्यर्थः । अशुभरूपस्याप्यभद्रमस्त्येवातः कथमाक्षेप इत्यत उक्तं ॥ विशेपत इति । अमंगलरूपस्य तस्य भद्रं नास्त्येव । प्रतीयमानमपि भद्रं कियदल्पं । अभद्रमपि विशेपतः किमस्तीति भावः । कुत इत्यतोऽवस्तुन इत्येतद्व्याचष्टे ॥ सर्वदाऽशुभरूपत्वादिति । अवस्तुनोऽस्वत-त्रस्य सर्वदाऽशुभरूप एव तिष्ठति । कदाऽप्यशुभापगमने स्वातन्त्र्याभावादिति भावः । कियदित्यस्यार्थमाह ॥ विशेपत इति । प्रतीयमानशुभरूपाविशेपः । प्रमाणेन व्याख्यातमेव स्ववचनेन व्याख्याति ॥ द्वैतस्येति । यत्नं कुर्वतोऽप्यभद्र स्वयोग्यतादाधिक्येन न भवति । स्वरूपभूताशुभादधिकमशुभं यत्नेनापि न भवति । कुतः । सर्वदाऽशुभरूपत्वात् । तथा च स्वभावतोऽशुभस्य नूतनतया प्राप्यमशुभं किमस्तीति भावः । द्वितीयार्धं व्याचष्टे ॥ अत इति । श्लोक प्रमाणेनैव व्याख्याति ॥ उच्यत इति । अयमर्थः । द्वैतस्याशुभरूपस्य चावस्तुनः । अस्वतंत्रपुरुषस्य भद्रं किमस्ति । यद्यस्ति तत्कियत् । अल्पमेव । अभद्र च किमस्ति । न किमपि । तर्ह्यस्ति खलु यद्यस्ति तर्हि तत्कियत् । विशेपतः स्वरूपादाधिक्येन नूतनतया यत्प्रशस्यत्वादिक तदनृतमेवेति ॥ ४ ॥ ननु स्वभावतोऽशुभस्य पुरुषस्य नूतनतया जायमानं भद्रं किमपि नास्तीति यदि तर्हि तस्य प्राप्तमशुभभेदादिकं नाशुभकारणमित्यागतमित्यतः । सत्यं । तेन देहेन स्वरूपे किमप्यशुभ न जायते किं तर्हि बहिरेवेत्याह ॥ छायेति । असगतत्वादेतत् श्लोकमवतार्य प्रमाणेन व्याचष्टे ॥ स्वभावतोऽशुभस्येति । नाशुभकारण । नूतनतयेति शेपः । इदानी व्याचष्टे ॥ व्यपेक्ष्येति । देहादिजीव व्यपेक्ष्य निःशक्तत्वादवस्त्वपि । शुभाशुभनॄणां । स्वभावतः शुभाशुभनॄणां शुभाशुभं यच्छेदेव । बहिरेवेति शेषः । छाया नीहारकाभासा इत्यनेन छायाप्रत्युदकाभासा इति विवृतं । प्रत्युदकशब्देन नीहारकमुच्यत इत्युक्तं भवति । असंतोऽपीत्यस्य व्याख्यानं ॥ नि शक्ता अपीति । विव इति शेपः । कार्यदाः । बहिरेवेति शेषः । अनेनार्थकारिण इति पदं विवृतं भवति । देहादेः सकाशादिति शेपः । शुभाशुभकार्यं भवेत् । बहिरिति शेपः ।

प्रत्युदक शब्दस्य नीहारवाचकत्वेऽभिधानमाह ॥ नीहार इति । अयमर्थः ॥ यथा छायाप्रत्युदकाभासाः छायानीहारसूर्यका बिंबभूतपुरुषे चंद्रसूर्याद्यपेक्षयाऽसंतोऽपि निःशक्ता अप्यर्थकारिणो दृष्टाः । बिंबादन्यत्रेति शेषः । कथ पुमधीना छाया पुरुषे बिंबे न किंचित्करोति । किं त्वन्यत्र । तदाश्रितपुरुषे आल्हादादिकं करोति । तथा चंद्राधीनो नीहारश्चद्रबिंबे किंचिन्न करोति । किं त्वन्यत्र तत्कार्यं शैत्यादिकं करोति । तथा सूर्याधीनः सूर्यकः सूर्यबिंबे किंचिन्न करोति किं त्वन्यत्राग्न्यादिकमुत्पादयति । एवं देहादयो भावा असंतोऽपि जीवापेक्षया निःशक्ता अपि आमृत्युतो मृत्युपर्यंतं भय । उपलक्षणमेतत् । अशुभादिकं यच्छंति । अशुभजीवानां बहिरेव न स्वरूपे । तथा शुभजीवानां शुभदेहाः शुभादिकमपि न स्वरूपे यच्छंति किंतु बहिरेवेत्यपि द्रष्टव्यं । तात्पर्ये तथोक्तत्वादिति ॥ ५ ॥ नन्ववस्थात्रयस्य भगवदधीनत्वात्सर्वं तेन व्याप्तमित्युक्तं । तत्र न केवलं तावदेव किंतु सर्वस्रष्टृत्वाच्च सर्वं तदधीनमित्याह ॥ आत्मैवेति । अत्रात्मा सृजति त्राति हरतीत्यन्यस्य जातत्वात्सृज्यते त्रायते हरत इत्यनन्वितमित्याशंक्य योजनां दर्शयति ॥ इदमिति । ननु कथमीश्वरस्य जगत्स्रष्टृत्वं तस्याप्युत्पत्त्यादेः सत्वादित्याशंकायामाह ॥ स्वय स्वात्मनेति । ईश्वरः स्वेनेत्यर्थः । ननु परमात्मा स्वेनैव सृज्यत इत्युक्तं । तदनुपपन्नं । परमात्मनः सृष्ट्यादिसद्भावे तथा योजनोपपत्तेः । तदेव कुत इत्याशंक्य प्रमाणेनैव परमात्मनः सृष्ट्यादिकमाह ॥ दीपादिति । दीपाद्दीपांतरस्याभिव्यक्तिवत्परमात्मनः सृष्टिर्नामाभिव्यक्तिरित्यर्थः । एतावत्कालपर्यंतं । उक्तार्थे श्रुतिमप्याह ॥ पूर्णमद इति । अदो मूलरूपं पूर्णं । इदमवताररूप पूर्णं । पूर्णान्मूलरूपात्पूर्णमवताररूपमुदच्यते उद्रिच्यते आविर्भूतं भवति । पूर्णस्यावताररूपस्य पूर्णत्वमादायैकीभाव प्राप्य पूर्णमेव मूलरूपमेवावशिष्यत इत्यर्थः । तस्मान्न ह्यात्मन इत्यनेन सर्वस्य मिथ्यात्वमुच्यत इति भाति । अतो योजयति ॥ आत्मन इति । भाव शब्दार्थमाह ॥ सृष्टिरिति । अनिरूपितेयं त्रिविधेत्येतद्व्याचष्टे ॥ अन्येनेति । तत्र प्रमाणमाह ॥ अन्यसादिति । इद गुणमयमित्येतद्व्याचष्टे ॥ अन्यत इति । गुणप्रधानमित्यनेन गुणमयमित्येतद्व्याख्यातं । गुणप्रधानव्याप्तं । ततश्च व्यापकाभावाद्व्याप्याभाव इति भावः । अत्रैवप्रमाणमाह ॥ गुणसंबंधेति । प्रत्यक्षेणनानुमानेनेत्यत्र प्रत्यक्षादिनाऽसत्ज्ञात्वेति मिथ्यात्वमुच्यत इति भाति । अतोऽसच्छब्दार्थमाह ॥ असमर्थमिति ॥ ततश्चात्मैवेत्यादेरयमक्षरार्थः ॥ न केवलं

स्वस्राद्यवस्थाप्रेरकत्वेनैव सर्वं भगवदधीनं किं तर्हीत्यत आह ॥ आत्मैवेति । प्रभुः समर्थः । आत्मैव भगवानेवेदं जगत्सृजति त्राति हरति । ननु भगवतः सृष्ट्यादिकर्तृत्वं तदा स्याद्यदि स्वयमुत्पत्त्यादिशून्यः स्यात् । न चैवं । किं नाम स्वस्याप्यन्यतः सृष्ट्यादिसद्भावादित्यत आह ॥ आत्मैवेति । आत्मनैव स्वेनैव सृज्यते त्रायते ह्रीयते । ननु कुतः स्वस्य स्वेनैवोत्पत्तिरित्यत उक्तं ॥ तस्मादिति । आत्मनः परमेश्वरस्य तस्मादमुष्मादीश्वरादन्यो भावः सृष्ट्यादिकर्ता न निरूपितः । कुत इत्यत आह ॥ आनिरूपितेति । आत्मनि परमात्मनि विषयेऽन्येन सृष्टिस्थितिसंहार इति त्रिधा मतिर्विद्वद्भिर्न निरूपिता । कुतः । निर्मूला मूलप्रमाणवर्जितेत्यर्थः ॥ ६ ॥ ७ ॥ परमात्मनोऽन्यतः सृष्ट्यादिकं नास्तीत्येतदेव विवृणोति ॥ इदमिति । अन्यतः क्रियमाणमिदं त्रिविध सृष्टिस्थितिसंहार इति त्रयं गुणमयं गुणप्रधानं तद्व्याप्यमितीश्वरमायया कृतमिति विद्धीत्यर्थः । तथा चान्यतः सृष्ट्यादिकं गुणमयत्वव्याप्यं । एवं च व्यापकीभूतगुणमयत्वाभावान्नान्यतः सृष्ट्यादिकमिति भावः । एव च सृष्ट्यादिकर्तृत्वात्सर्वस्य भगवदधीनत्वं तेन च तद्व्याप्यत्वं लब्धं । ततः किमित्यत आह ॥ एतदिति । मदुदितमेतन्मम व्याप्तत्वं विद्वान् ज्ञानविज्ञानैः पूर्णो भूत्वा न निंदति न च स्तौति । स्वामी सर्वेषां प्रेरयित्वा तत्तत्कर्म कारयतीति यथार्थज्ञानी भूत्वा न निंदति न च स्तौति । लोके निःसंगः सन् संचरतीत्यर्थः । सूर्यवदित्युक्तं दार्ष्टांतिके कथमित्यतो विवृणोति ॥ प्रत्यक्षेणेति । प्रत्यक्षेणेदं जगदाद्यंतवदसदसमर्थमिति ज्ञात्वा तथा कृतकत्वादित्याद्यनुमानादिनाऽऽद्यंतवदसमर्थमिति ज्ञात्वा निःसंगः सन् संसारेऽनासक्तः सन् इह चरेदित्यर्थः ॥ ८—१० ॥ संसारः कस्येति पृच्छति ॥ उद्धवेति । जीवस्य वा देहस्य संसारो नोभयमपीत्याह ॥ नैवेति । आत्मनो जीवस्य । कुत इत्यत उक्तं ॥ द्रष्टृदृश्ययोरनात्मस्वदृशोरिति । तथा च देहस्य जडत्वेन जीवस्य स्वदृक्त्वेन स्वप्रकाशत्वेन निमित्तेन तयोर्न संभवतीति भावः । अतः । हे ईश । कस्येयं संसृतिरुपलभ्यत इत्यर्थः ॥ ११ ॥ ननु माऽस्तु तयोः संसारः । ईश्वरस्य स्यादित्यत आह ॥ आत्मेति । अनावृत आवरणशून्यः । अग्निवदीश्वरो दारुवद्देहोऽतः कस्यायं संसार इत्यर्थः ॥ १२ ॥ जीवस्यैव संसारः । नन्वत्रोक्त किल स्वप्रकाशत्वादिति । देहसबधानंतरं स्वप्रकाशत्वेऽपि तत्संबंधदशायां स्यात्संसार इत्याशयेनाह ॥ भगवानिति । अत्र ससारोऽपार्थोऽपि फलवानिति विरुद्धमुच्यतेऽतः प्रमाणेनैव विरोध

परिहरति ॥ फलवानिति । संसारो जीवात्मनः फलवानित्युच्यते । संसारे स्थूलदेहादिप्राप्तौ जीवस्य श्रवणादिना मोक्षो भवतीति । नित्यानदान्नित्यानंदस्वरूपत्वाद्दुःखादिरूपः संसारोऽपार्थको निरर्थक इत्युच्यते । अतो न विरोध इत्यर्थः । तथा चात्मनो जीवस्य देहादिभिः सन्निकर्षणं संबंधो यावदास्ति तावत्पर्यंत दुःखादिरूपः संसारः । कीदृशोऽयं संसारः । अपार्थो जीवस्य नित्यानंदस्वरूपत्वेन निरर्थकः फलवांश्च । श्रवणादिसंपत्त्या मोक्षरूपफलप्रदः । निरर्थकत्वे कथमहं दुःखीति प्रत्यय इत्यत उक्त ॥ अविवेकिन इति । स्फुटतरविवेकाभावादानंदरूपस्यापि दुःखानुभव इत्यर्थः ॥ १३ ॥ अपार्थक इत्युक्तं । निरर्थकत्व पुनरवधारयति ॥ अर्थेऽपीति । असंगतिपरिहारायोत्तरश्लोकमवतारयति ॥ सस्तृत्यभावस्यैवेति । अपार्थोऽप्यविवेकिन इत्युक्तं । निरर्थकत्व पुनरप्यविद्यमान इत्यादिना नित्यानंदस्वरूपस्य जीवस्य निरर्थक एव संसार इत्यवधारणार्थः । तथा च द्विरुक्तेरवधारणार्थत्वान्न पुनरुक्तिरिति भावः । ननु संसारः फलवांस्तावदिति फलवत्त्वस्याप्युक्तत्वात्कथं निरर्थक एवेत्यवधारणमित्यत उक्त ॥ सस्तृत्यभावस्यैव फलरूपत्वादिति । तथा च संसारदशायां संसृत्यभावाभावान्निरर्थकत्वमिति भावः । ननु संसारे वैषयिकसुखरूपफलस्य विद्यमानत्वात्कथं निरर्थक एव संसार इत्यवधारणमित्यत आह ॥ उच्यत इति । वैषयिकसुखादेरल्पफलत्वादविवक्षया निरर्थकत्वमिति भावः । साध्यमध्याहरति ॥ अत इति । च शब्द एवार्थे । यतः प्रमाणेनाल्पसुखं निष्फलमित्युच्यते । अतोऽफलत्वावधारणार्थं पुनर्वचनमिति भावः ॥ ततश्चैवं योजना ॥ अर्थेऽविद्यमानेऽपि अस्मात्संसारात्प्रयोजनाभावेऽपि पुंसः संसृतिर्न निवर्तते । अत्रेदं निमित्तं ॥ ध्यायतो विषयानिति । विषयध्यानेन तत्रैवासक्त्या पुनः संसारः प्राप्यत इति भावः । यथा स्वप्ने विषयध्यानेन निरंतरविषयानुस्मरणसजातवासनासंतत्याऽनर्थागमो न निवर्तेत तथेत्यर्थः ॥ १४ ॥ अज्ञानिन एव संसारोऽनर्थकरो न ज्ञानिन इत्याह ॥ यथा हीति । अप्रतिबुद्धस्य स्वप्नावस्थामास्थितस्य स्वाप्नो निद्रा बव्हनर्थकरः । स एव प्रस्वापः प्रतिबुद्धस्य नैव मोहाय कल्प्यते । एव संसृतिरज्ञानिनामनर्थकृन्न ज्ञानिनामित्याशयः ॥ १५ ॥ नन्वयं जीवस्य संसारः स्वाभाविक औपाधिको वेत्याशंकायां न स्वाभाविकः किं त्वौपाधिक इत्याह ॥ शोकेति । नन्वत्राहंकारस्य शोकादयो नात्मन इति प्रतीयते । तत्तु पूर्वविरुद्धं । पूर्वं जीवस्य संसार इत्युक्तत्वादित्याशंक्याभिमतमर्थमाह ॥ अथ आत्मनेति ।

उक्तार्थे प्रमाणमाह ॥ अहंकारादिति । मनः प्रभेदरूपाहंकारादित्यर्थः । स्पृहेच्छा । ततश्च शोकादयो मनःप्रभेदभूताहंकारस्य दृश्यंते जन्ममृत्युश्च तस्यैव । आत्मनो जीवस्य त्वहंकारसंबंधादेते प्रतीयंते न स्वतश्चिदानंदस्वरूपत्वादिति भावः ॥१६॥ ननु कया युक्त्या जीवस्यैव संसार इत्यतः कैमुत्यन्यायलक्षणंनेत्याह ॥ देहेंद्रियेति। अप्रतीत्यैतद्व्याचष्टे ॥ देहेंद्रियेति। मूत्रं महानित्युरुधेह गीत इत्यस्यार्थमाह ॥ सूत्र महानिति । अभिप्रायमाह ॥ प्रधानजीवेति । उक्तार्थे नियामक प्रमाणमाह ॥ ससारयुगिति ॥ ततश्चायं श्लोकार्थः ॥ यो देहेंद्रियप्राणमनसामभिमानो यस्य सः । तदभिमानेन युक्तो योंऽतरात्मा सर्वेषामंतःस्थितो गुणैः कर्मभिरारब्धा मूर्तिर्यस्य सः। यश्च सूत्रं महानित्याद्यधिकारनामभिरुरुधा बहुधेह गीतः स कालतंत्रः कालाभिमानी दुर्गाधीनो जीवो हिरण्यगर्भोऽपि इह संसारे आधावति किमुतान्ये जीवा इत्याशय इति ॥ १७ ॥ नन्वेवं प्रबलस्य संसारस्य कथं समुच्छेद इत्यतस्तन्मूलाज्ञाननाशेन नाशो भविष्यतीत्याशयेनाज्ञाननाशप्रकारमाह ॥ अमूलमिति । अत्रामूलमित्यस्य निर्मूलमिति प्रतीयतेऽतो व्याचष्टे ॥ अमूलमिति । बहुरूपरूपमिति द्विवारमुक्तिः किमर्थेत्यत आह ॥ बहुरूपेणेति । मनोवचःप्राणशरीरकर्मेत्येतदप्रतीतेर्व्याचष्टे ॥ मन आदीनामिति । अयमर्थः । अत्रैतच्छब्देन मोह शब्दोक्तमिथ्याज्ञानपरामर्शः । यदमूलं विष्णुमूलं । विष्णुजन्यमिति यावत् । यद्बहुरूपेण तेनैव विष्णुना रूप्यते ज्ञायते । यच्च मन आदीन्येव कर्मविषयो यस्मात् । तद्विषयकमेतन्मिथ्याज्ञानं मुनिर्मननसमर्थोऽधिकार्युपासनया सितेन तीक्ष्णेन ज्ञानासिना छित्वाऽतृष्णो निःसगो भूत्वा शरीरपातपर्यंतं गां भूमिं चरतीति ॥१८॥ ननु ज्ञानासिना छित्वेत्युक्तं । तत्र किमाकारकं ज्ञानमित्यतस्तत्स्वरूपं दर्शयति ॥ ज्ञानमित्यादिना । अत्र केवल शब्दार्थमाह ॥ केवलमिति । तदेव मध्यं इत्यस्यान्वयो न भातीत्यतस्तदाह ॥ आद्यतयोरिति । पूर्वार्धे विशेष्याप्रतीतेस्तदाह ॥ पर ब्रह्मेति । मूले परं ब्रह्मेत्यध्याहारः । कीदृशं ब्रह्मेत्यतोऽन्वयं दर्शयति ॥ ज्ञान विवेकादिस्वरूपमिति । पूर्वार्धं व्याचष्टे ॥ परिपूर्णगुणत्वादिति । तपः शब्दस्य सतापार्थकत्वप्रतीतेराह ॥ सर्वैरिति ॥ अयमर्थः ॥ यत्परब्रह्म ज्ञानं ज्ञानरूपं च यच्चान्यतो विविक्तत्वाद्भिन्नत्वाद्विवेकः । यश्च नितरां गमयतीति निगमः । यच्च सर्वैरालोच्यत्वात्तपः । यच्च प्रति प्रत्यक्षेष्विंद्रियेषु स्थितत्वात्प्रत्यक्षं । यच्चाचार्यसंप्रदायसिद्धत्वादैतिह्यं । यच्चार्थादनुमीयमानत्वादनुमानं । यच्च पूर्णगुणत्वात्कालः । यच्च हेतुर्निमित्तकारण । यस्मात्कारणादेतादृशं ब्रह्मास्य जगत आद्यंतयोः केवलं स्वतंत्रं । तस्मात्कार-

णात्तदेव मध्ये स्वतंत्रमिति ॥ १९ ॥ पुनर्ज्ञानस्वरूपप्रतिपादनाय प्रवृत्तमिमं श्लोकं हिरण्मयेत्यस्य हिरण्मयात्मककटकादिकमित्यर्थ इति प्रतीयतेऽतो व्याचष्टे ॥ हिरण्यादीति । शंखादिकं हिरण्मयमित्यर्थः । तथा च नात्र मयटस्तादात्म्यार्थत्वं किंतु प्राधान्यार्थत्वमित्युक्तं भवति । द्वितीयार्धं योजयति ॥ शखेति । पूर्वश्लोकस्थं केवलमित्येतदनुवर्तत इत्यभिप्रायेण केवलमित्युक्तं । तस्यार्थः ॥ प्राधान्येनेति । शंखमंचादिष्वित्यध्याहारः संपूर्णश्लोकं प्रमाणेन विवृणोति ॥ रथोपस्थ इत्यादिना । परिष्कारात्संबधात् । व्यवहाराय मुख्य प्रधानं । प्राधान्येन व्यवहार्यमाणमिति यावत् । अनेन द्वितीयार्धाद्यपादं विना श्लोको व्याख्यातः । रथपरिष्कृतं मध्येत्यनेन तदेव मध्ये व्यवहार्यमाणमिति व्याख्यातं भवति । मध्येऽपि प्राधान्येन व्यवहार्यमिति योजितमित्यर्थः । रथोपस्थान्निष्कृष्येत्यनेन पश्चाच्चेत्यपि व्याख्यातं । यद्वदेवमित्यादिनाऽहमस्य तद्वदिति व्याख्यातं । जगद्देहाज्जगतो देहाच्चेत्यर्थः । सर्वदा सर्वशब्दवाच्यो भगवानित्याशयेन योजनांतरमाह ॥ सुरपित्रित्यादिना । ततश्च सुरनरांतर्याम्यपेक्षया तत्तच्छब्दवाच्यो भगवानित्याशयः । यथा सुवर्णं पूर्वं पश्चान्मध्येऽपि सुवर्णं । तथाऽहं जगतः सकाशात्पूर्वं पश्चाच्चेंद्रादिसर्वशब्दवाच्य इत्यत्र प्रमाणमाह ॥ यथेत्यादिना । अकृतमित्यनेन स्वकृतमित्यस्य सुष्ठुकृतमित्यर्थो दर्शितः । कुडलादिकं । तृतीयार्थे द्वितीया । कुडलाद्याकारेणेत्यर्थः । एकीभवति । कुंडलाद्याकारनाशानंतरमिति शेषः । अत्रैव प्रमाणांतरमाह ॥ तत्तन्नियामकस्यैवेति । सर्वं सुरादिकं नामैवेत्यन्वयः । ननु सर्वशब्दवाच्यत्वे भगवतः कथमन्यत्र व्यवहार इत्यतोऽव्यक्ताधिकरणन्यायेनेत्याह ॥ तत्सबभादिति । केवलं प्राधान्येनेत्युक्त तत्रार्थे प्रमाणमाह ॥ एकलमिति । प्रधानमित्यर्थः । परिष्कृतहिरण्यवदिति । रथोपरिपरिष्कृतहिरण्यवदित्यर्थः । परिष्कृतहिरण्यवदित्यनेन यथा हिरण्यस्य दार्वादिभ्यः प्राधान्यमेवं भगवतः प्राधान्यमुक्तं । तत्र प्रमाणमाह ॥ प्रत्येकमिति । आदि पदेन शंखादिकं गृह्यते । दार्वादिकं प्रत्येकं प्रत्येकं स्वतंत्र प्रधान नेत्यर्थः । कुत इत्यत उक्तं ॥ विक्रियागतमिति । विक्रियां गच्छतीति विक्रियागतं रथादिमहाफलं नियतसुवर्णापेक्षया । एतद्विक्रियेऽधिकद्रव्यप्राप्तिर्न भवतीत्यर्थः । सुवर्णं स्वतंत्रं प्रधानं । कुतः । विक्रियोपगतं महाफलं । यतः । तद्विक्रिये द्रव्याद्यपेक्षयाऽधिकद्रव्यप्राप्तेः सत्वादित्याशयः । कुत इत्यत उक्तं ॥ प्रवृत्ताविति । अन्यजगत्प्रवृत्तौ । उपलक्षणमेतत् । सत्तादावित्यपि ग्राह्यं । अन्यथाऽस्वतंत्र । अतो जगत्प्रवृत्तकत्वान्यथाऽनुप-

पत्या स एव स्वतंत्र इति भावः ॥ तथा चेयं योजना ॥ भगवान्सर्वदा सर्वजगद्विलक्षण इति ज्ञातव्य इत्यत्रोच्यते । सुवर्णलिप्त रथादिकमस्ति । तत्र यथा स्वकृत स्वेन परमात्मना कृतं सुवर्णं सर्वस्य हिरण्मयरथादेः पुरस्ताच्चित्रितायाः पूर्वं रथादेः सकाशात्पृथक् । केवलं प्राधान्येन स्वर्णव्यवहार्यमाणं च भवाति । तथा सर्वस्य हिरण्यखचितत्वेन हिरण्यप्रधानस्य रथादेः पश्चाच्च रथादिभ्यः पृथक्करणकालेऽपि रथादेः पृथक् केवलं च प्राधान्येन स्वर्णमिति व्यवहार्यमाणं तदेव स्वर्णं मध्येऽपि रथादिपरिष्करणकाले पृथक् केवलं च प्राधान्येन नानापदेशैः स्वर्णरथः स्वर्णशंख इत्यादिनानापदेशैर्व्यवहार्यमाणं । तद्वदस्यजगत आदावंते मध्येऽप्यहं स्वतत्रः पृथक् चेत्यर्थः । यद्वा । यथा स्वर्णं कालत्रयेऽपि सुवर्णमेव । एवं कालत्रयेऽप्यहं सर्वशब्दवाच्य इत्यत्रोच्यते ॥ यथेति । यथा हिरण्यं स्वर्णं सर्वस्य हिरण्मयस्य कुडलादेः पुरस्तात्कुंडलकरणात्पूर्वं स्वकृतं सुष्टुकृतं । कुंडलाद्याकारेण विकृतमिति यावत् । हिरण्यमेव । पश्चात्कुंडलाद्याकारनाशानंतरमपि हिरण्यमेव । मध्ये कुंडलाद्याकारदशायामपि तदेव स्वर्णमेव । तद्वदस्वतत्रस्य जगतः पूर्वं सर्वशब्दवाच्यः । पश्चाच्च प्रलयेऽपि सर्वशब्दवाच्य इति । मध्येऽपि सुरनरादिनानाव्यपदेशैः शब्दैरहमेव वाच्य इति ॥ २० ॥ हरिर्वासुदेवरूपेण जगत्कर्तेति स्वतंत्र इति ज्ञातव्य इत्यत्रोच्यते ॥ विज्ञानमिति । अत्र त्रिपदस्थमित्येतद्व्याचष्टे ॥ मोक्षदमिति । विज्ञानशब्दवाच्यपरमात्मन इदं विशेषणमिति भावेन विज्ञानमित्युक्त । ननु समन्वयेन परमात्मनोऽन्वयव्यतिरेकाभ्यां कर्तृत्वमुक्तं । तदयुक्तं । नित्यत्वे सति विभुत्वेन कालदेशयोरन्वयव्यतिरेकासंभवादित्याशंक्यात्राभिप्रेतान्वयव्यतिरेकौ दर्शयति ॥ तदिच्छयेति । भगवतोऽन्वयव्यतिरेकाभावेऽपि तदिच्छयाऽन्वयव्यातिरेकसंभवादुक्तमुपपन्नं । इच्छायाः स्वरूपत्वेऽपि सृष्टिकालाद्युपाधिविशिष्टाया अन्वयव्यतिरेकोक्तिर्युक्ता । कालाद्युपाधिविशिष्टाया इच्छायाः कालविशेषस्थत्वात् । स्यात्कालः स तदैवेति कालस्य स्वगतत्वत इत्युक्तेरिति भावः । ततश्च गुणत्रय गुणानां त्रयं यस्य तत्सात्विकराजसतामसजीवजातं त्रिपदस्थं त्रिषु पदेषु मोक्षसंसारतमोलक्षणस्थानेषु स्थापयतीति त्रिपदस्थं । यदेतत्पूर्वोक्तं विज्ञानरूपं ब्रह्म वर्तते तदेन तुर्येण वासुदेवरूपेणान्वयव्यातिरेकतस्तादिच्छायाः सत्वं यत्तत्सर्वं जगदस्त्यन्यथा नेत्यन्वयव्यतिरेकतः कारणकार्यवर्तृ कारण महदादि कार्यं ब्रह्मांडादि । तयोः कर्तृ तदेव रूपं सत्यं स्वतंत्रमिति योजनेत्यर्थः ॥ २१ ॥ ननु हरिरेव स्वतंत्र इति कुतः । अन्यत्स्वतंत्रं किं न स्यादित्यत आह ॥ न यदीति ।

अत्र पुरस्तात्पश्चान्मध्ये च यन्नेति त्रिकालनिषेधमुक्त्वा परेण यद्भूतं यच्च प्रसिद्धं तद्व्यपदेशमात्रं न वस्तुत इति मिथ्यात्वमुच्यत इत्यतो योजयति ॥ तदेव केवलमिति । सदित्यस्य सत्यमित्यर्थः । पूर्वश्लोकोक्तं केवलमिति पदमत्रानुवर्तनीयमिति भावेन केवलं सत्यमित्युक्तं । ननु तदेव केवलं सत्यं चेज्जगतः सत्यत्वं नास्तीति प्रतीयतेऽतः प्रमाणेनैव तां शंकां परिहरति ॥ स्वातंत्र्यमिति । अन्यस्य जगतः । ननु विष्णोरन्यस्य प्रवाहतः सदाऽस्तित्वं सत्यत्वमित्युक्तमयुक्तं । जडस्य सत्यत्वं न स्यादित्यत आह ॥ पुप्रकृत्योरिति । तेनानित्यप्रपंचस्य प्रवाहतः सदाऽस्तिता सत्यत्वं । नित्यप्रपंचस्य तु स्वरूपेण सदाऽस्तिता सत्यत्वमिति भावः । मध्ये च तन्नेत्येतदप्रतीतेर्व्याचष्टे ॥ मध्ये च तत्केवल नेतीति । प्रकारांतरेण व्याचष्टे ॥ तदिति । जगत्स्वातंत्र्येण नैवास्तीत्यर्थः । कुतः । यद्यस्मात्तदुत्पत्तिविनाशवदित्यर्थः । तर्हि स्वातंत्र्यं कस्येत्यत उक्तं ॥ स्वातंत्र्येणेति । तस्य विष्णोः । कुत इत्यत उक्तं ॥ यदिति । यस्मात्कारणात्सत्ताज्ञानद । जगदिति शेषः । अनेन भूतशब्दस्य सत्तार्थकत्व च प्रसिद्धशब्दस्य ज्ञानार्थकत्वमित्युक्तं भवति ॥ तथा चायमर्थः ॥ यद्ब्रह्म पूर्वस्तात्पूर्वकल्पे केवलं नाद्वितीयं न किंतु साद्वितीयं तदेव सत्य स्वतंत्र स्यादिति मे मनीषा । उत्तरत्राप्यस्यान्वयो द्रष्टव्यः । तथा च यद्ब्रह्म पश्चादुत्तरकल्पे केवलं नाद्वितीयं न किंतु सद्वितीयं । यद्ब्रह्म मध्ये इदानीं केवलं नाद्वितीयं न किंतु सद्वितीयं तदेव सत्यं । ननु कालत्रये ब्रह्मणः केवलं नेति केवलं नेति केवलत्वं निषिद्धं । तथात्वे केवलो निर्गुणश्चेति श्रुतिविरोध इत्यत उक्त ॥ तद्व्यपदेशमात्रमिति । तत्केवलो निर्गुणश्चेति वचनं व्यपदेशमात्रं वाङ्मात्रं । तथा च जडामिश्रत्वादिरूपस्तस्यान्य एवार्थोऽस्तीत्याशयः । अनेन कालत्रयेऽपि ब्रह्मजगतोरुभयोरपि सत्वमुक्तं भवति । ननु तर्ह्युभयोः सत्वाविशेषाद्ब्रह्मवज्जगतः स्वातंत्र्यं स्यादित्यतस्तत्सत्तायास्तदधीनत्वान्नेत्याह ॥ भूतमिति । यज्जगद्भूत सत्तावद्यत्प्रसिद्धं च ज्ञानादिमत्परेणैवास्ति । तदधीनत्वे नास्तीति यावत् । यद्वा । यज्जगत्पुरस्तादुत्पत्तेः पूर्वं स्वतंत्रं न । यत्पश्चादुत्तरत्र स्वतंत्र न । यन्मध्ये स्वतंत्र न । ननु मध्येऽहं कर्तेति स्वातंत्र्यं प्रतीयतेऽतः कथं निषेध इत्यत उक्तं ॥ तद्व्यपदेशमात्रमिति । पूर्वोत्तरत्र चाभावेन मध्ये स्वातंत्र्य वाङ्मात्रमित्यर्थः । तथा च यन्मध्ये स्वतंत्रं न तदिदं जगद्येन परेण भूतं प्रसिद्ध तदेव केवलं सत्यमिति मे मनीषा स्यादिति जगतः कालत्रयेऽपि स्वातंत्र्यं निषिद्ध भवतीति ॥ २२ ॥ ननु जगत्स्वतंत्रमेव किं न स्यादित्यतस्तद्ज्ञानां

मतं । ज्ञानिनां मतं तु जगद्ब्रह्माधीनमिति वक्तुं प्रवृत्तोऽयमविद्यमान इति श्लोकः । अत्र जगतोऽसत्वं स्पष्टमुच्यत इत्यतो व्याचष्टे ॥ अविद्यामानता नामेति । कुत इत्यतो दृष्टांतमुखेन विवृणोति ॥ यथेति । असन्नित्युच्यते जनैरस्वतंत्रत्वादित्याशयः । अतः स्वयंज्योतिर्ब्रह्मैव जगदाकारेण भातीत्यन्यथाप्रतीतिनिरासाय योजयति ॥ अत इति । ब्रह्मणः सकाशादेवेत्यर्थः । द्वितीयं जगत् । नात्रातः शब्दस्य हेत्वर्थकत्वं किंतु ब्रह्मार्थकत्वं । तच्च पूर्वं प्रकृतमित्यतः शब्देन तत्परामृश्यत इत्यर्थः । ब्रह्म शब्दार्थमाह ॥ ब्रह्मेति । आत्म शब्दार्थमाह ॥ आत्मेति । कोऽर्थः संपन्न इत्यत आह ॥ प्रकृतीति । ततश्चेयं योजना । यो द्वितीयो वैकारिको विकारयोग्यो राजससर्गो रजोगुणसंबंधी सर्गो यस्य स एष प्रपंचोऽविद्यमानोऽप्यसन्नप्यस्वतंत्रोऽप्यवभासते । स्वतंत्रं इत्यज्ञानामवभासते । कुतः । यतः स्वयंज्योतिर्ब्रह्मैव स्वतंत्रं । तर्हि कथं जगदवभासत इत्यत उक्त ॥ अत इति । ब्रह्मेंद्रियार्थात्मविकारचित्रं । प्रकृतींद्रियजीवविषयादिविचित्रं जगत् । अतो ब्रह्मतयैवावभासते ब्रह्माधीनतयैवावभासत इति ॥ २३ ॥ ज्ञातव्यांशमुक्त्वोपसंहरति ॥ एवमिति । एवमुक्तप्रकारेण परापवादेन नेति नेति इति वैलक्षण्यज्ञानेनानुग्रहीतैर्हेतुभिर्निर्दोषोपपत्तिर्विवेकबुद्ध्या निश्चयबुद्ध्या स्फुटं ब्रह्म विविच्य पृथक्कृत्य तेन ज्ञानेनात्मसंदेहं मनसि स्थितं संदेहं छित्वा स्वरूपानंदेन तुष्टः सन् अखिलकामुकेभ्यस्तृष्णाजननशीलेभ्यः सर्वदुर्विषयेभ्य उपारमतेत्यर्थः ॥ २४ ॥ परापवादप्रकारं विवृणोति ॥ नात्मेति । अत्रात्माऽसुर्नेत्यनेनैव प्राणभिन्नत्वस्य प्राप्तत्वात्पुनर्वायुजलंहुताश इत्यनेन किमर्थमुच्यत इत्यत आह ॥ वायुरेवेति । वायुरेव स्वयं प्राण इत्यनेन वायुजलमित्यत्र वायु शब्दः प्राणपर इत्युक्तं भवति । तत्रस्थे प्राणस्थे । अनेन वाय्वाद्याधारत्वेन स्थितोदतेजसी गृहीते इत्युक्तं भवति । ननु तद्ग्रहणे क उपयोग इत्यत आह ॥ उदेनेति । वाय्वाद्याधारत्वेन स्थितजलहुताशशरीरोऽसुः प्राणो नेत्येकेन प्रकारेण व्याख्याय प्रकारांतरेणापि व्याचष्टे ॥ प्राणस्येति । पंचभूतेषु त्रयमेव कुतो गृहीतमित्यत आह ॥ ततो हीति ॥ अत्यल्पमिति । तथा चाल्पत्वादविवक्षेति भावः । इदमुक्तं भवति । यदा वायोर्ब्रह्मांडाद्बहिः पंचभूतोत्पत्तेः प्रागुत्पत्तिस्तदा प्रकृत्यात्मकमूलजलतेजोभ्यामेव तच्छरीरमुत्पन्नं । यदा ब्रह्मांडांतरुत्पत्तिस्तदोक्तविवक्षया भूतत्रयकृतं वपुरिति । धिषणेति बुद्धेर्गृहीतत्वात्पुनः सत्त्वमिति बुद्धेर्ग्रहणे पौनरुक्त्यमित्याशंकायामाह ॥ सत्त्व मूलबुद्धिरिति । महत्तत्त्वजन्यं बुद्धितत्त्वं मूलबुद्धि

शब्देनोच्यते । अहंकारजन्या बुद्धिर्धिषणशब्देनोच्यते । अतो न पौनरुक्त्यमिति भावः । अर्थसाम्यमित्यनेन किमुच्यत इत्यतोऽत्राभिप्रेतार्थं वदंस्तस्यान्वयं दर्शयाति ॥ अहमिति । अर्थेषु श्रवणादिषु समत्वादहमुल्लेखस्य समत्वात् । श्लोकार्थे प्रमाणमाह ॥ नेति । ततश्चात्मा परमात्मा पार्थिवं वपुर्न । आत्मा इंद्रियाणि न । देवास्तदभिमानिनो देवाश्चात्मा न । वाय्वाधारजलहुताशशरीरोऽसुरप्यात्मा न अथवा । आत्मा वायुजलहुताशलक्षणभूतत्रयकृतशरीरोऽसुर्न । मनोऽन्नं पृथिवी मात्र पंचतन्मात्रं न । धिषणा चाहंकारजन्या बुद्धिर्न । सत्त्वं मूलबुद्धिरित्येते आत्मा न भवतः । खं महाकाशं न । कृतिः करणमात्मा न । अर्थसाम्यमहंकृतिः । अहं शृणुयामीत्यादिरूपेण सर्वार्थेषु समत्वादहंकारोऽर्थसाम्यं । अर्थसाम्यमहंकार आत्मा नेत्यर्थः ॥ २५ ॥ एवं जगद्विलक्षणस्य हरेरन्यप्रयुक्तगुणदोषौ न स्त इत्याह ॥ समाहितैरिति । तत्सुविविक्तधाम्नः । तेभ्य इंद्रियेभ्यो विषयेभ्यश्चात्यंतविलक्षणस्वरूपस्य हरेर्गुणात्मभिः शब्दादिविषयासक्तैः पुरुषैः समाहितैश्चित्तैकाग्रत्वेन स्थापितैः करणैरिंद्रियैः को गुणो भवेत् । न कोऽपि । उत विक्षिप्यमाणैर्विषयेष्वितस्तत आकृष्यमाणैरिंद्रियैर्हरेः किं दूषणं न किमपीति । अत्रोदाहरणमाह ॥ घनैरिति । उपेतैः प्राप्तैर्घनैर्मेघैः सर्वगुणपूर्णस्य रवेः सूर्यस्य किं को वा गुणः । न कोऽपि । तथा विगतैर्मेघैस्तस्य किं किं दूषणं न किमपीत्येवमित्यर्थः ॥ २६ ॥ तदेव विवृणोति ॥ यथेति । यथा नभ आकाशं वाय्वादिगुणानां गुणैः स्पर्शादिभिर्न सज्जते संबद्धं न भवति तथा गतागतैर्यातायातैर्देहादिगुणैर्न सज्जते । तथा परमक्षरं संसृतिहेतुभिः ससारहेतुभिः सत्त्वरजस्तमोमलैस्तन्मयै रागादिदोषैरसंगतमसंबद्धमित्यर्थः ॥ २७ ॥ असंगतिपरिहाराय तथाऽपीति श्लोकतात्पर्यमाह ॥ भगवत इति । यथा भगवतो निर्दोषत्वमेवं जीवस्याऽपि निर्दोषत्वाच्च समाधानं तदभावाभ्यां गुणदोषौ । तथा च संगपरिवर्जनं न कर्तव्यमित्याशंक्य यद्यपि भगवतो गुणदोषाभावेऽपि जीवस्य दोषित्वात्संगः परिवर्जनीय एवेत्याह । तथाऽपीत्यनेनेत्यर्थः । तावदित्यस्यार्थः ॥ मुक्तिपर्यंतमिति । उक्तार्थे प्रमाणमाह ॥ समाहितेनेति । विष्णोरित्यंतेन पूर्वश्लोकार्थे प्रमाणं दर्शितं भवति । तथाऽपीत्यनेन तथाऽपीति श्लोको विवृतः । तथा च तथाऽपि भगवतो गुणदोषाभावेऽपि मायारचितेषु गुणेषु प्रकृतिनिर्मितेषु विषयेषु संग आसक्तिर्दृढेन भक्तियोगेन मद्भक्तिलक्षणोपायेन परिवर्जनीय एव तावत्पर्यंतं । कियंतकालमित्यत उक्त ॥ यावद्रिति ।

यावत्पर्यंतं रजस्तमःकषायं रजस्तमोभ्यां जनितं पापं निरस्येत गमिष्यति। मुक्तिपर्यंतमिति शेषः। तावत्पर्यंतं वर्जनीय एवेत्यन्वयः ॥ २८ ॥ विपक्षे बाधकमाह ॥ यथेति। यथा नृणामसाधुचिकित्सितामयः साधुचिकित्साशून्यो रोगः पुनः पुनः प्ररोहन् प्रबलं भवत् संतुदति व्यथयति रोगिणं। एवमपक्वकषायकर्म परिपाकशून्यकर्मफलं मनः सर्वसंगेषु सर्वेषु विषयेषु संगो यस्य सः। तं कुयोगिनं विद्धयति पीडयतीत्यर्थः ॥ २९ ॥ ननु कुयोगिनं विद्धयतीत्युक्तं। तर्हि तस्य विघ्नप्रतिरुद्धत्वेन योगानुष्ठानासंभवाद्भगवदप्राप्तिः स्यादित्यत आह ॥ कुयोगिन इति। ये कुयोगिनो ध्यानपरिपाकरहितास्त्रिदशोपसृष्टैरंतरैराधिदैविकैर्विघ्नैर्मनुष्यभूतैर्मनुष्यैश्च भूतैः सृष्टैरंतरायैराध्यात्मिकैराधिभौतिकैश्च विघ्नैर्विहताः प्रतिबद्धा हि यस्मात्तस्मात्ते कुयोगिनः। प्राक्कृताभ्यासबलेन पूर्वजन्मकृतो यो ध्यानलक्षणोपायस्तद्बलेन विघ्नान्परिहृत्य योगं युंजंति कुर्वंति। पश्चान्मत्प्रसादेन मां। आप्नुवंतीति शेषः। अनंतरं कर्मतंत्रं कर्मयोगं भूयो न युंजतीत्यर्थः ॥ ३० ॥ ननु कर्मयोगं नानुतिष्ठंतीत्युक्तं। योगं युंजतीत्यपि चोक्तं। किं तदुभयकरणे स्वातंत्र्यमस्येत्यतो नेत्याह ॥ करोतीति। असौ जंतुः प्राणी। आनिपाताच्छरीरपातपर्यंतं कर्म स्वयं करोति। एतावता स्वातंत्र्यं नास्तीत्याह ॥ क्रियत इति। केनापि पुरुषेण चोदितः प्रेरितः। तत्प्रेरणयेति यावत्। कार्यते स च नियामको हरिरेवेति भावः। ननु तर्हि विद्वदविदुषोः को विशेषः। उभावपि भगवत्प्रेरणयैव कर्म कुरुते यत इत्यत उक्तं ॥ नेति। तत्रोभयोर्मध्ये विद्वान्ज्ञानी प्रकृतौ स्थितोऽपि देहस्थितोऽपि स्वसुखानुभूत्या भगवदनुग्रहाविर्भूतनिजस्वरूपानंदानुभवेन विषयेभ्यो निवृत्ततृष्णो यतोऽतः कर्माणि कुर्वन्नपि तत्र कर्मसु न सज्जते इति विशेष इत्यर्थः ॥ ३१ ॥ पुनः कीदृशोऽयं ज्ञानीत्यतोऽसंप्रज्ञातसमाध्यवस्थापन्नस्य ज्ञानिनः स्थितिमाह ॥ तिष्ठतमिति। अत्रात्मानामिति स्वात्मन उक्तत्वात्तत्सहपठितात्मस्थमतिरित्यत्राप्यात्मशब्दः स्वात्मवाचीति भात्यतो व्याचष्टे ॥ आत्मस्थमतिरिति। सहपाठलक्षणसान्निध्यापेक्षयोग्यतायाः प्रबलत्वादित्याशयः। उद्यंतमुद्योगं कुर्वंतं। अन्नमदंतं स्वभावं स्वस्य धर्मं पारतंत्र्यादिकं। अन्यत्किमपीह मानं। अन्यत्किंचित्क्रियमाणमेतादृशं स्वात्मानं न वेद ज्ञानी। कुतः। यत आत्मस्थमतिः परमात्मस्थमतिः। असंप्रज्ञातसमाध्यवस्थाविशिष्ट इति यावदित्यर्थः ॥ ३२ ॥ नन्वसंप्रज्ञातसमाध्यवस्थापन्नोऽन्यन्न पश्यतीत्युक्तं। यदि समाध्युपरतो किंचित्पश्यति तत्र

विशेषमाह ॥ यदीति । अत्र स्वप्नदृष्टांतेन जगतो मिथ्यात्वमुच्यते इति प्रतीयते तथाऽन्यदित्यस्याप्यर्थो न प्रतीयतेऽतोऽपेक्षिता- ध्याहारेणान्वयं दर्शयति ॥ परमात्मन इति । पारतंत्र्यादेः सकाशात्परमात्मनोऽन्यदस्वतंत्रमित्यर्थः । समग्रश्लोकं प्रमाणेन विवृणोति ॥ नानेति । हि यस्माज्जगतः स्वातंत्र्यं नाना प्रमाणेन विरुद्धं तस्मात्स्वतंत्रो भगवान्विष्णुरेक एव न संशय इति योज्यं । असदिंद्रियार्थे वस्तुतया न मन्यत इति विश्वमिथ्यात्वमुच्यत इति भातीत्यतो वस्तु शब्दार्थकथनपूर्वकमन्वयप्रदर्शनेन विवक्षितमर्थमाह ॥ वस्तुतयेति । मूले तथेति शेष इत्युक्तं भवति । तथा स्वतंत्रत्वेन न मन्यत इत्यर्थः । स्वप्नं यथोत्थाय तिरोदधानमिति स्वप्नस्य मिथ्यात्वमुच्यत इति भात्यतः प्रमाणेनैव योजयति ॥ अस्त्येवेति । स्वाप्नं स्वप्नावस्थापन्नमाखिल गज- तुरगादिकं । आत्मनि मनस्यस्त्येव । कुत इत्यतो वासनामयत्वादित्याशयेनाह ॥ वासनारूपमिति । तर्हि तत्र मिथ्याभूतं किमित्यत आह ॥ जाग्रदिति । यस्मात्कारणात् । एतत्स्वाप्नगजादिकं जाग्रदिति ज्ञानं भ्रमात्मकं तस्मात्कारणाज्जाग्रत्वं मिथ्याभूतमित्यर्थः । तद्व- त्स्वप्नपदार्थवद्विद्यमानं सदेव । एतत् जगत् । ननु भवतु स्वाप्नजाग्रत्वस्य मिथ्यात्वं पश्चाददर्शनात् । प्रकृतेर्जगत्स्वातंत्र्यं मिथ्याभूतमिति कुतः । अपि तु सत्यमेव । कुतः । अहं कर्तेत्यादिप्रतीतेरित्यत आह ॥ उत्थित इति । स्वप्नादुत्थित इत्यर्थः । ज्ञानवान्ज्ञानी । तथा चाहं कर्ते- त्यादिप्रतीतिस्तु भ्रांतस्यैव भवतीत्याशयः ॥ तथा चायमर्थः ॥ मनीषी ज्ञानी । असदिंद्रियार्थे । अमंगलमिंद्रियाविषयं देहगेहादि यदि पश्यति स्म । तर्हि तत्तथा स्वतंत्रत्वेन न मन्यते । कुतः । यतोऽन्यद्वस्तुतया नानाऽनुमानेन विरुद्धं । परमात्मनोऽन्यज्जगद्वस्तुतया स्वतंत्रत्वेन नानाऽनुभूतेनानुसारिप्रमाणेन विरुद्धं । कोऽर्थस्तत्स्वतंत्रं न भवतीति । परतंत्रत्वात् । अतो न तथा मन्यते । कथमिव । यतः सुप्तः पुमान् उत्थाय तिरोधानं स्वाप्नं गजादिकं जाग्रत्वेन न मन्यते । स्वाप्नपदार्थे जाग्रत्वस्याभावात् । एवं मनी[illegible]द्रियार्थं स्वतंत्रत्वेन न मन्यत इति ॥ ३३ ॥ ॥ ३४ ॥ यथेति । यथा भानोः सूर्यस्योदयो नृचक्षुषा तमो हन्यान्न तु तमः संविभत्ते । तमः प्रापको न भवतीति यावत् । एवं वैराग्यादिसाधनसामग्र्या निपुणा सती मे समीक्षा ज्ञानं पुरुषस्य बुद्धेस्तमिस्रं हन्यादित्य न्वयः ॥ ३५ ॥ नन्वस्तु ज्ञानस्य स्वरूपमेतादृशं । अथाऽपि ज्ञेयस्य स्वरूप[illegible] [illegible]मित्युद्धवस्य [illegible] परिहरति ॥ [illegible] । अत्रैकद्वीतीयपद्योः पौनरुक्त्यं प्रतीयतेऽतोऽत्राभिप्रेतमर्थं प्रमाणेनाह ॥ [illegible] । प्रसंगात्पुरुष [illegible]

श्री० ३१

निर्वक्ति ॥ पूर्णत्वादिति । तथा च येनेरिताः प्रेरिता वाग्रचना वाग्व्यवहाराश्चरंति प्रवर्तंते। एषोऽहमेतादृशः। कीदृश इत्यत उक्तं ॥ स्वयज्योतिरित्यादि । स्वयंज्योतिः स्वप्रकाशोऽत एवाज उत्पत्तिशून्योऽप्रमेयः साकल्येनाज्ञेयो महानुभूतिर्महत्यपरिच्छिन्नाऽनुभूतिर्ज्ञप्ति-र्यस्य सः सकलानुभूतिः सर्वज्ञ एको ज्ञानानंदाद्यभिन्नत्वादेकोऽद्वितीयः सर्वोत्तमो वचसां विरामः साकल्येन वागगोचरः । यतो वाचो निवर्तंत इति श्रुतेरित्यर्थः ॥३६॥ एवं ज्ञानं ज्ञेयस्वरूपं निरूप्य मिथ्याज्ञानस्वरूपं निरूपयति ॥ एतावानिति । एतावानात्मनः स्वस्य संमोहो मिथ्याज्ञानं । एतत्किं यद्विकल्पः प्रमाणविरुद्धकल्पनं यज्जीवस्वातंत्र्यादि तदेव । तु शब्दोऽपि शब्दार्थः । आत्मा जीवः । केवले जडामिश्रेऽमृते नित्यमुक्ते मयि स्वमात्मानं स्वस्य रूपं तदाधारत्वेनाचलं यथा स्यात्तथा न पश्यतीति यत्तदप्या-त्मसंमोह इत्यर्थः । तदिदमाह ॥ एतावानिति । विरुद्धस्य प्रमाणविरुद्धस्य । अचलं स्वात्मानमिति सामानाधिकरण्येनान्वय-भ्रांतिं वारयितुमाह ॥ अचलमिति । अचलं यथा भवति तथा न पश्यतीत्यन्वय इति भावः ॥ ३७ ॥ ननु यदुक्तं स्वात्मनो-भगवदधीनत्वादर्शनं मिथ्याज्ञानमिति तन्न । जीवब्रह्मणोरैक्यात् । ननु कथमेतज्जगत्कारणत्वस्य भगवति सत्वेन जीवे तदभावेन तयोर्विरुद्धधर्माधिकरणत्वादिति चेन्न । जगतो मिथ्यात्वेन तत्कारणत्वस्य च मिथ्यात्वादित्यतो जगत्सत्यमित्याह ॥ यदिति । नामाकृतिभिर्ग्राह्यं । यन्नामभिराकृतिभी रूपैर्ग्राह्यं । ज्ञेयं यत्पंचवर्णं पंचभूतात्मकं विश्वं यदस्ति तदबाधितं ज्ञानबाध्यं न भवति । कुतः । विश्वं सत्यमित्यादि श्रुतेः । नन्वयं व्यर्थवाद इत्यत उक्तं ॥ व्यर्थ इति । अत्रायं वादो व्यर्थः । नाप्यर्थवाद इत्यन्यथा-प्रतीत्या व्याचष्टे ॥ अयमिति । विश्वं सत्यमित्ययं वादः । द्वयं विदंति सूरय इत्येतद्विवृणोति ॥ जगत्परमेश्वर चेति । श्लोकार्थे प्रमाणमाह ॥ पचभूतात्मकमिति । पंचभूतात्मकमित्यनेन पंचवर्णमिति व्याख्यातं । व्यर्थो नेति निषेधस्य प्रसक्तिपर्वकत्वात्तदर्थ व्यर्थ इति प्रसक्तिं दर्शयति ॥ भ्रांतिसिद्धमपंडिता वदतीति । अर्थवाद इत्येतत्पंडितास्त्वद्धा जगदाहुरबाधितमित्यनेन विवृत । तेनार्थ शब्दो विषयपर्याय इति दर्शितं । अर्थोऽभिधेयैरवस्त्वित्युक्तेः । प्रवाहरूपेण सदा विष्णोर्वशे स्थितमित्यनेन द्वयं विदंति सूरय इति विवृतं । तेन सूरय इत्यनेन पंडिता इति व्याख्यातं । जगद्विष्णोः सहभावोपपादनार्थं प्रवाहरूपेण सदेत्युक्तं । सम-प्रधानावित्त्यर्थमिच्छावशे स्थितमित्युक्तमिति बोध्यं ॥ तथा चायमर्थः ॥ अयं जगदबाध्यमिति वादो व्यर्थो न किं त्वर्थवाद

एव । अर्थवानेवायं वादः । कुतः । सूरयो ज्ञानिनो जगत्परमेश्वरं चेति द्वयं विदति जानंति । ज्ञात्वा च मुक्तिं प्राप्नुवंत्यतो मोक्षजनकज्ञानविषयत्वात्सत्यामिति सिद्धयतीति ॥ ३८ ॥ अतरायैर्विहताः कुयोगिनः प्राक्कृताभ्यासबलेन तान्परिहृत्येत्युक्तं । अधुना प्रकारांतरेणोपायमाह ॥ योगिन इति । अपक्वयोगस्य योगिनो युंजतो योगानुष्ठानं कुर्वतस्तस्य काले योगानुष्ठानसमये उपस्थितैः प्राप्तैरुपसर्गैर्विघ्नैरयं यादि विहन्येत तत्रायं विधिरुपायो विहितः कल्पित इत्यर्थः ॥ ३९ ॥ कोऽयमित्यत आह ॥ योगधारणेति । यमनियमादिनेत्यर्थः । खंडस्मृतिरूपधारणान्वितैरासनैः कांश्चिद्विघ्नान्निर्दहेत् ॥ ४० ॥ नामसंकीर्तनादिभिः कांश्चिदनुवृत्त्या सेवया । अशुभदान्विघ्नान् शुभैः शुभप्रदैर्विविधोपायैः ॥ ४१ ॥ देहेन योगधारणादिविधानप्रकारमाह ॥ केचिदिति । केचिदविवेकिनः परमात्मना धार्यं सुकल्पमत्यतदृढ वयसि स्थितं तारुण्यवयसोपेतमेतादृशं देहं विविधोपायै रसायनादिभिः स्थिरं विधाय कृत्वा । अथ वार्धिक्यावस्थायां सिद्धयर्थं युंजंति । योगमिति शेषः । तारुण्यावस्थायां मोक्षार्थं यततीत्युक्तं । तत्रास्यानित्यत्वेन निश्चितपतनस्य देहस्य पोषणायासेन किं व्यर्थत्वादित्याह ॥ इहेति । इहलोके वर्षशतेन । वर्षशतपर्यंतमिति यावत् । अशीत्या च । अशीतिवर्षपर्यंतमिति यावत् । तदायासो यः सोऽपार्थको व्यर्थः । कुतः । अद्य श्वो वा देहस्य पतननिश्चयस्यैव सत्वादिति भावेनाह ॥ अतवत्वादिति । यथा वनस्पतेर्वृक्षस्य फलस्येव वृक्षस्य पक्वं फलं यथा पतति तथा शरीरस्यांतवत्वेन पतिष्यत्येवेति निश्चयस्यैव सत्वात्तदायासो ह्यपार्थक इत्यर्थः । यद्वा । विविधोपायैर्देहं स्थिरं कृत्वेत्यनेन देहपोषणं कार्यमित्युक्तं । तत्र कियत्पर्यंतं कार्यमित्युक्ते शतवर्षाशीतिवर्षात्प्रागेव । तदनंतरं पोषणेन किं प्रयोजनं कार्याक्षमेन व्यर्थत्वादित्याह ॥ इहेति । वर्षशताशीत्या वर्षशतेनाशीतिवर्षेण च । कोऽर्थः । तदनंतरमिति यावत् । तदायासो ह्यपार्थकः । कुत इत्यतस्तदनंतरं पतिष्यत्येवेति निश्चयस्य सत्वादित्याह ॥ अतवत्वादिति ॥ ४२ ॥ ४३ ॥ ननु योगानुष्ठानोपयुक्तत्वाद्देहस्य तत्पोषणं रसायनाद्युपायैरवश्यं कार्यमित्यतो योगेनैव सर्वं भविष्यतीत्याह ॥ योगमिति । नित्य योगं निषेवतो ध्यानलक्षणयोगं सेवमानस्य पुंसः कायो देहश्चेत् यदि कल्पता समर्थतामियात् प्राप्नोति तत्तर्हि स मतिमान्योगी देहदार्ढ्यत्वे हेतुभूत योगमेव श्रद्दध्यात् । योगमुत्सृज्यान्यत्र रसायनादौ न श्रद्धां कुर्यादित्यर्थः

॥ ४४ ॥ ननु किं योगे श्रद्धया प्रयोजनमित्यत आह ॥ योगचर्यामिति । इमां योगचर्यामाचरन् मदपाश्रयोऽहमेवापाश्रयो यस्य स मदपाश्रयो योगी यः सः स्वसुखानुभूः स्वरूपसुखमनुभवतीति स्वसुखानुभूः । अत एव निस्पृहोऽनासक्तः सन् अंतरायैर्विघ्नैर्न विहन्यत इत्यशेषमतिमंगलं ॥ ४५ ॥ इति श्रीभागवतटिप्पण्यामष्टाविंशोऽध्यायः ॥ ११—२८ ॥ ॥

॥ हरिः ॐ ॥ योगचर्यामिमामित्यादिश्रुत्वोद्धवः पृच्छति ॥ सुदुश्चरामिति । अनात्मनाऽजितमनस्केन पुरुषेणेमां योगचर्यां योगानुष्ठानं सुदुश्चरामत्यंतं कर्तुमशक्यमिति मन्ये यतोऽतः । हे अच्युत । अजितपुमान्यथा भवदुक्तोपायेन कथं सिद्ध्येत्तत्प्रकारं मेंऽजसा ब्रूहीत्यर्थः । किं तेनेति न वाच्यमित्याह ॥ प्रायश इति । हे पुंडरीकाक्ष । योग युंजतः कुर्वतो योगिनो मनोऽसमाधानात्समाधानाभावे त्वय्यासक्तं न भवेच्चेद्विषीदति विषण्णं भवति । कुतः । मौननिग्रहसंयमाभ्यां कर्शितं कष्टयुक्तं यतोऽतस्त्वय्यर्पितं स्थित न चेद्विषीदतीति कृत्वा योगानुष्ठानं न कार्यमिति भावः ॥ २ ॥ किं फलं तेनेत्याशक्याह ॥ अथो इति । यस्मादसमाधानाद्विषण्णं भवति अथो तस्मात् । हे विश्वेश्वर हे अरविंदलोचन । सुखं सुखकरमानंददुघं ते पदांबुज हंसाः श्रयेरन् । कुतः । यतोऽमी मानिनो ज्ञानिनो योगकर्मभिर्योगाख्यकर्मभिस्त्वन्मायया विहताः प्रतिबद्धा न भवंतीत्यर्थः ॥ ३ ॥ हे अच्युत । अशेषबंधो । ज्ञानिनो मिथ्याज्ञानरहिता भवंतीत्येतन्न चित्रं तव । कुतः । यद्यस्मात्त्वं दासेष्वनन्यशरणेष्वनन्यरक्षकेष्वात्मदः सायुज्यलक्षणमोक्षदः । दासेष्वात्मद इत्यस्येदमेव तात्पर्यमित्याह ॥ य इति । यः स्वयमीश्वराणां ब्रह्मादीनां श्रीमत्किरीटमणिसंबंधपादपीठः स त्व मृगैर्गोभिर्गोपालैश्च सह तदन्वरोचयः । गतवानिति यावत् । अतो दासेष्वात्मदस्तस्मात्तव नैताच्चित्रमित्यर्थः ॥ ४ ॥ पुनर्भक्त्या तं प्रशंसति ॥ तमिति । अखिलात्मदयितेश्वरमखिलानामात्मदयितानां प्रियाणामीश्वरमाश्रितानां सर्वार्थदं । एतादृशं तं त्वां को नु स्वकृतिवत् । हेतुगर्भमिदं विशेषणं । त्वया क्रियमाणोपकारवित्पुमान्विसृजेत् । किं चैतादृशं त्वां हित्वाऽन्यत्किमपि कमपि को वा त्वयि विस्मृतचित्तवृत्तिः पुमान् भजेत् । यो भजेत्स एक एवेत्यर्थः । विस्मृतचित्तवृत्तित्वं कुतः । यतस्तव पादरजः संबद्धामृतांभः स्वादं किं वा वेद न वेदेत्यर्थः । यदि वेद तर्हि तस्य चित्तवृत्तिस्त्वय्येव स्यादित्याशयः ॥ ५ ॥ स्वकृतविदित्युक्तमुपकारं दर्शयति ॥ नैवेति । हे नतमूर्ध मूर्धा नत नतमूर्ध ईश । कवयस्तवोपकार-

स्यापचितिं प्रत्युपकारं कर्तुं ब्रह्मायुषाऽपि नैवोपयांति । न समर्था इति यावत् । किं तदुपकारमित्यतस्तद्दर्शयति ॥ य इति । यस्त्वं तनुभृतामंतर्बहिः स्थित्वाऽशुभं विधुन्वन् आचार्याणां चैत्यं चित्तस्थितिं तद्वपुस्तेन तनुभृतां स्वगतिं त्वद्विषयकज्ञानं व्यनक्षि व्यक्तीकरोषि । अगम्यत्वाद्धरिस्तास्मिन्नाविष्टो मुक्तिदो भवेदित्युक्तेः । अतस्त्वां विनाऽन्योपकारी कास्तीत्याशयः ॥ ६ ॥ अत्यरनुक्तचेतसाऽत्यंतस्निग्धचेतसा । पृष्टः स्वशक्तिभिर्ज्ञानेच्छाक्रियाभिर्जगदेव क्रीडनकं यस्य सः । गृहीतमूर्तित्रयो जगतो जाग्रदाद्यवस्थाप्रवृत्त्यर्थं सृष्ट्याद्यर्थं च स्वीकृतमूर्तित्रय इश्वरेश्वरः सप्रेमं मनोहरस्मितः सन् जगादेत्यर्थः । अत्र किं तन्मूर्तित्रय विवक्षितामिति न प्रतीयतेऽतः प्रमाणेन तदभिप्रायमाह ॥ आत्मेति । यथाक्रमं हरेरात्मादिमूर्तित्रयं जाग्रत्स्वप्नसुषुप्तीनां सृष्टिस्थिति-संहाराणां प्रवर्तकं विवक्षितं इत्यर्थः ॥ ७ ॥ मृत्युं संसारं मृत्योर्जयति प्राप्नोति ॥ ८ ॥ मां स्मरन् शनकैर्मदर्थं मत्प्रीत्यर्थं सर्वाणि कर्माणि कुर्यात् । मयि समर्पितमनस्तत्प्रभेदभूतचित्तः पुमान् । मद्धर्मात्ममनोरतिर्मद्धर्मेषु मदात्मसु भक्तेषु मनोरतिः ॥९॥ साधुभिः श्रितान्देशान्संश्रयेत । मद्भक्ताचरितानि कर्माणि कुर्यात् ॥ १० ॥ पृथक् सत्रेणेति प्रत्येकं क्रियमाणसत्रेण योगेनेति प्रतीयतेऽतो व्याचष्टे ॥ पृथक् स्वयमेवेति । यात्रामहोत्सवं रथोत्सवादिवार्षिकयात्रामहोत्सवं कुर्यादित्यर्थः । तथा च पृथक स्वयमेव सत्रेण बहुभिः सह वा यात्रामहोत्सवान् गीतादिभिः कारयेदित्यर्थः ॥ ११ ॥ अमलाशयः पुमान् भूतेषु अरितत्वेन मामीक्षेत । तथात्वे जीववदावृतत्वं किं नेत्याह ॥ बहिरिति । बहिरंतरपगतावरणमित्यपीक्षेत । एतादृशमात्मनि स्वस्मिन् आत्मानं मामीक्षेदित्यन्वयः ॥ १२॥ हे महाद्युते उद्धव । मद्भावेनेति मदभेदेनेति प्रतीयतेऽतो व्याचष्टे ॥ सर्वभूतेष्वस्ति विष्णुरिति । सर्वभूतानामर्चने क्रियमाणे सति तदानीं सर्वभूतेष्वस्त्वित्वेन विष्णुरिति भावो यः स एव मद्भाव इति सतां मत इत्यर्थः । किं चादित्येऽर्चने क्रियमाणे सति तदानीमेवमनुसंधानं कार्यं । तद्गतात्मना विष्णुः पूज्य इति । तथा चाधिष्ठानं विहाय पुल्कसादिषु विद्यमानो हरिरेव पूज्यः । आदित्ये चाधिष्ठानसद्भावेनेति भावः । तथा च सर्वभूतेष्वस्ति विष्णुरिति मद्भावेन सर्वाणि भूतानि मन्यमानः सभाजयेन्नावज्ञां कुर्यात् केवलं च ज्ञानं समाश्रयेत् ॥ १३ ॥ किं तत्केवलज्ञानमित्यत आह ॥ ब्राह्मण इति । ब्राह्मणादिषु सर्वत्र सममेकप्रकारं मन्यमानो यः स एव पंडितो मत इत्यर्थः ॥ १४ ॥ एवं भावनाफलमाह ॥ नरेष्विति । नरेषु माम-

भीक्ष्णं भावयतः स्मर्तुरचिरान्मयि भक्तिः स्यात् । तथा च साहंकारा माया मिथ्याज्ञान तिरस्कारं नाशं यातीत्यर्थः । हि शब्देनात्रार्थे भक्त्या प्रसन्नो भगवान्दद्यान्मुक्तिं न चान्यथेति प्रमाणं सूचयति ॥ १५ ॥ भक्तिमतैवं भाव्यमित्याह । विसृज्येति । स्वयमहंकारं दैहिकीं देहसंबंधिनीं परिदृश्यमानव्रीडां लज्जां विसृज्य त्यक्त्वाऽश्वचंडालगोखरान् श्वचंडालगोखरपर्यंतं विद्यमानान् जनानुद्दिश्य प्रणमेदित्यर्थः ॥ १६ ॥ एतदुपासनावधिमाह ॥ यावदिति । मद्भावः सर्वभूतेष्वस्ति विष्णुरिति ज्ञान नोपजायते तावदेवं पूर्वश्लोकोक्तरीत्या वाङ्मनः कायवृत्तिभिरुपासीतेत्यन्वयः ॥ १७ ॥ एवमुपासीनस्य परोक्षज्ञानिनो मतिप्रकारमाह ॥ सर्वमिति । तस्योपासकस्य सर्वं जगद्ब्रह्मात्मक ब्रह्मणात्तं स्वीकृतमिति अधीनमिति मतिर्भवति । तया स्वमनीपोत्थया विद्ययाऽच्युतं परमात्मानं परं भिन्नं परिपश्यति ॥ १८ ॥ ननु सर्वभूतेष्वस्ति विष्णुरित्येतत्कादाचित्कं किमित्यतो नेत्याह ॥ अयमिति । मनोवाक्कायकर्मणा सर्वेषु भूतेषु मद्भावो योऽयं सर्वकल्पानां सध्रीचीनः साधारण इत्यर्थः ॥ १९ ॥ प्रारंभमात्र इच्छा वा विष्णु धर्मो न निष्फलेति प्रमाणानुसारेणाह ॥ न हीति । हे अंग उद्धव । अस्य मद्धर्मस्योपक्रमे प्रारंभे क्रियमाणेऽण्वप्यणुमात्रोऽपि ध्वंसः फलाभावो नास्तीति मया सम्यग्व्यवसितो निश्चितः । कुतः । अनाशिषो निष्कामधर्मस्य निर्गुणत्वान्मोक्षसाधनत्वात् । तथा च निष्कामधर्मस्य मोक्षफलकत्वनिश्चयेन तादृशधर्मोपक्रमेणापि मोक्षस्यावश्यं भाव्यत्वादित्याशयः ॥ २० ॥ नन्वन्यदेवतोद्देशेन क्रियमाणधर्मक्रमोऽपि सफलश्चेत्कोविशेषस्त्वद्धर्मस्येत्यत आह ॥ यो य इति । पुंभिरन्यदेवतोद्देशेन क्रियमाणो यो योगोऽपरो मनोधर्मो ध्यानादिः स ते त्वदुपलक्षिताधिकारिणो निष्फलाय कल्पते । तदेवाह । तदायासस्तदुद्देशेन क्रियमाणधर्मायासः । सत्तम उद्धव । निष्फलः स्यादिति । कथं । नयादिरिवेति । अत्र नयादि शब्दार्थमाह ॥ नयादिरिति । कुत इत्यत उक्तं ॥ यदिति । यद्यस्मात्कारणात्सुदुर्नयः । नयं सन्नयं । अति अतीत्य सर्वदा वर्तत इत्यर्थः । तथा चादौ नये प्राप्ते सति तदुल्लंघ्य दुर्नयं प्राप्नोतीति भावः । एव च नयः सन्नय आदिर्यस्य स दुर्नय इति व्युत्पत्तिर्नयादि शब्दस्योक्ता भवति । तथा च नयादेरिव दुर्नयस्येव स यथा निष्फलस्तथाऽयमपीति दृष्टांतार्थः ॥ २१ ॥ बुद्धिमतां बुद्धिः । एषां मनीषिणां च । मनीषैषां का एषा ॥ यदिति । अत्रानृतेन मर्त्येनेति देहमिथ्यात्वमुच्यत इति भाति । किंच सत्य शब्दार्थश्च न प्रतीयतेऽत आह ॥ एकदेति ।

यद्यस्मात्कारणाज्जगदेकदा ज्ञातरूपेण न तिष्ठत्यतोऽनृतामित्युच्यते । कुत इत्यत उक्तं ॥ चंचलत्वादिति । सत्य शब्दार्थमाह ॥ सर्वदेति । अनृतेन चंचलेन मर्त्येन देहेनामृतं नित्यमुक्तं सत्यं सर्वदैकप्रकारं मां प्राप्नोतीति यद्येषेत्यन्वय इत्यर्थः ॥ २२ ॥ उपसंहरति ॥ एषेति । ब्रह्मवादस्य प्रतिपादकस्य वादस्येत्यर्थः समासव्यासाविधिना संक्षेपविस्तरेण देवानामपि दुर्गमोऽयमभिहितो गदितमुक्तमित्यर्थः ॥ २३ ॥ नष्टसंशयो भूत्वा ॥ २४ ॥ धारयन्यः सनातनं ब्रह्म । गुह्यं वेदरहस्यं । परं ब्रह्माधिगच्छति प्राप्नोति ॥ २५ ॥ प्रचयगमनफलमाह ॥ य इति । ब्रह्मदायस्य ब्रह्मधनवतः ॥ २६ ॥ अध्येतुः फलमाह ॥ य इति । मां दर्शयन् ॥ २७ ॥ श्रोतुः फलमाह ॥ य इति ॥ २८ ॥ स्वोक्तज्ञानेऽवधृतिं पृच्छति ॥ अपीति । हे उद्धव हे सखे । त्वयेद ब्रह्मोपधारितमपि किमित्यर्थः । मोहो विगतः किं अपि किमित्यर्थः ॥ २९ ॥ शठाय गूढद्वेषिणे ॥ ३० ॥ शूद्रयोषितां यदि भक्तिः स्यात्तासां ब्रूहीत्यन्वयः ॥ ३१ ॥ इदमेव मुक्तिसाधनं नान्यदित्याह ॥ नैतदिति । द्वितीयार्धो दृष्टांतार्थः ॥ ३२ ॥ नन्वेतद्विज्ञायान्यत्ज्ञातव्यं नास्तीति कथं । अन्यज्ञानदर्शनादित्यतस्तत्सर्वं मोहकारण मोहसाध्यं वेत्याह ॥ ज्ञानेति । भगवदितरज्ञाने दुष्कर्मणीतरयोगे । वार्तायां दंडधारणे इत्यत्र नृणां यावानर्थोऽस्ति तावान्सर्वोऽपि चतुर्विधमोहस्तत्साध्यो वा तत्साधनं वेत्यतो नान्यत्ज्ञातव्यमित्यर्थः ॥ ३३ ॥ यदा मर्त्योऽयं त्यक्तसमस्तकर्माणि हरौ निवेशितात्मा भवति । अहमस्वतंत्रस्तदधीन इति यदा मे मया चिकीर्षितश्च भवति कारितो भवति । भगवत्प्रेरितोऽहं कर्म करोमीत्यनुसंधानवान् भवतीति यावत् । यदाऽमृतत्वं प्रतिपद्यमानः प्राप्नु योग्यो भवेत्पश्चादात्मभूयाय निर्दुःखानंदानुभवाय मोक्षाय कल्पत इत्यर्थः ॥ ३४ ॥ ३५ ॥ पूर्णमुत्सिच्यमानं विष्टभ्य स्थिरीकृत्य बहुमन्यमानो बहुमानं कुर्वाणः ॥ ३६ ॥ हे अजाद्य । यो मे आश्रितो मोहमयोऽधकारो मिथ्याज्ञानात्मकांधकारः स तव सन्निधानाद्विद्रावितः । यथा विभावसोरग्नेः समीपगस्य पुरुषस्य शीतं तमश्च किं नु अभिप्रभवंति । किमाक्षेपे । नाभिप्रभवंतीत्यर्थः ॥ ३७ ॥ अनुकंपिताशयं कथयति ॥ प्रवार्धतेति । हि यस्माद्भवता मे मम विषये । अनुकंपिता । भावे क्तः । अनुकंपा कृपावर्धिता । विज्ञानमयः प्रदीपो दत्तः । अतः को वा त्वदीयः कृतज्ञस्त्वत्कृतोपकारज्ञस्त्वत्पादमूलं हित्वाऽन्यच्छरणं समीयादित्यन्वयः ॥ ३८ ॥ यः स्नेहपाशः सृष्टिविवृद्धये त्वया प्रसारितो विस्तारितः सः स्वमायया

निजेच्छया प्रादुर्भूतात्मविबोधाख्यहेतिना वृक्णग्रंथिः छिन्न इत्यर्थः ॥ ३९–४२ ॥ द्वंद्वमात्राणां शीतोष्णादीनां ॥ ४३ ॥ विविक्ते एकांते । तिस्रो गतीर्भूर्भुवःस्वरिति गतीरतिव्रज्यातिक्रम्य ततः परं मामेष्यासि ॥ ४४ ॥ हरिमेधसा विष्णुना तं प्रदक्षिणं परिसृत्य कृत्वा पादयोः शिरो निधाय । आर्द्रधीरश्रुकलाभिः पदद्वंद्वमभिषिंचन् अथोऽनुचक्रमे ॥ ४५ ॥ कृच्छ्रं कष्टं यथास्यात्तथा । पुनः पुनर्नमस्कृत्य ॥ ४६ ॥ विशालां बदरीं समास्थायानुष्ठाय ॥ ४७ ॥ आनंदसमुद्रेण कृष्णेन संभृतमुत्पन्नं ज्ञानामृतं भागवतायोद्धवाय भाषितं यत्ज्ञानामृतमेतान्निषेव्यासेव्य जगद्विमुच्यत इत्यर्थः ॥ ४८ ॥ शुको मंगलमाचरति ॥ भवभयमिति । अहं तमाद्यं सर्वज्ञं पुरुषर्षभं सर्वोत्तमं नतोऽस्मीत्यन्वयः । यो भवभयमपहंतुं भृत्यवर्गान् ज्ञानामृतं पाययन्नास्ते । अमृतसाम्यमुपपाद्यते । कीदृशममृतं । ज्ञानविज्ञाने एव सारं स्वादु यस्य तत्तथा । पुनरमृतसाम्यमुपपाद्यते । निगमकुमुदद्भ्रं पूर्वोक्तं ज्ञानं निगमलक्षणं कुमुदैकदेशासिद्धं । अमृतमप्युत्तम भवति । अत इदमपि वेदवंद्येपु सारं श्रेष्ठं । पुनः कीदृशं । उदधिकल्पं समुद्रकल्पं । अधिकारिणां योग्यताविशेषात्पूर्णत्वेन समानं । एतादृशं ज्ञानामृतं भृंगवत् । प्रथमार्थे वातिः । तथा च भृंगराजो यथा स्वभृत्यान्पुष्परसं पाययति तथा भृत्यवर्गान्पाययन्नास्ते तमित्यन्वय इत्यर्थः ॥४९॥ इति श्रीभगवताटिप्पण्यामेकोनत्रिंशोऽध्यायः ॥११–२९॥

॥ हरिः ॐ ॥ भूमिं त्यक्त्वा गत इति चेत्तत्राह ॥ ब्रह्मशापेति । संसृष्टे संबद्धे । युक्ते इति यावत् । प्रेयसीमिति प्रियां । नन्वत्यजादित्यत्र भगवान्कथं तनुमत्यजत्त्यक्तवानिति पृच्छत इति भातीत्यतस्तदनूद्य व्याचष्टे ॥ तनुमत्यजादिति । तेनाति शब्दोऽतिशयार्थः । अत्यजादित्यस्यार्थः ॥ अहरदिति । कोऽर्थः संपन्न इत्यत आह ॥ भूलोकादिति । तथा च भगवान्प्रेयसी तनुं कथं भूलोकात्स्वर्लोकं प्रत्यहरदित्यर्थः ॥ २ ॥ इतोऽप्यतिसुंदरं देहं कथं त्यक्तवान् । ननु स्यादेतत् । यदि भगवद्देहः सुंदरः स्यात्तदेव कुत इत्यत आह ॥ प्रत्याकृष्टुमिति । अबलाः स्त्रियः । यत्र भगवदंगे लग्नं संबद्धं नयनं प्रत्याकृष्टुं प्रत्याहर्तुं न शेकुर्न शक्ताः । यद्यशो यस्य यशः । आत्मलग्नं सतां मनः संबद्धं चेत्सतां कर्णाविष्टं चेन्न सरति कर्णादेर्नापसरति । यस्य श्रीवाचं श्रीमद्वाक्यं मनःकर्णयो रतिं सुखं जनयति । कोऽनुमानः कवीनामित्येतद्दुर्गमार्थं ततो व्याचष्टे । कः सुखरूपोऽनुमानः कवीनां मानानुसारीनि । ततश्च यो देहः सुखरूपः यश्च कवीनां ज्ञानिनां मानानुसारी मानप्रतिपाद्य इत्यर्थः । यन्च युधि भार-

तारव्ये युद्धे जिष्णोरर्जुनस्य रथ गतं दृष्ट्वा तत्साम्यं तद्रूपसाम्यमीयुः प्रापुः । भीष्मादय इति शेषः । अत एतादृशं रूपं कथमत्यजदित्यन्वयः ॥ ३ ॥ सुधर्मायामासीनान्यदून्प्रतीत्यन्वयः ॥ ४ ॥ द्वार्वत्यां दृश्यंते । उपायप्रदर्शिभिरास्थितं चेन्नष्टा भविष्याम इति ज्ञानवाद्भिः ॥ ५ ॥ सरस्वती वर्तत इति शेषः ॥ ६ ॥ अभिषिच्य स्नात्वा । सुसमाहिता एकाग्रचित्तयुक्ताः संतः ॥ ७॥ ॥ ८ ॥ त्रिधिरुपायः । एषः क इत्यत आह ॥ देवेति ॥ ९ ॥ १० ॥ तस्मिन्क्षेत्रे ॥ ११ ॥ कदंबरसनिर्मित मधु मैरेयकं ॥१२॥ सघर्षः कलहः ॥१३॥ वेलायां समुद्रतीरे । आततायिनो वधोद्युक्ताः ॥ १४ ॥ तदेव विशदयति ॥ पतदित्यादिना । दुर्मदा एते मिथः समेत्य शरैर्न्यहन् । कथमिव । द्विपा गजा वने दाद्भिर्यथा न्यहंतथेत्यर्थः ॥ १५ ॥ अन्योन्यमासाद्य मदांधकारिताः कर्तव्याविचारमूढाः संतो जघ्नुः । कुतः । मुकुंदेन विमोहिता इति ॥ १६ ॥ १७ ॥ अध्वर्युदाः केचन यादवा विसृज्यमाना आसज्यमानाः सौहृदं विसृज्य जघ्नुरिति ॥ १८ ॥ एतदेव विशदयति ॥ पुत्रा इति ॥ १९ ॥ २० ॥ तं कृष्णं ते यादवाः ॥ २१ ॥ बलभद्रं प्रत्यनीकं द्वेषिणं मन्यमानाः ॥ २२ ॥ २३ ॥ क्षयं नाशं ॥ २४ ॥ २५ ॥ आत्मान मन आत्मनि हरौ ॥ २६ ॥ निर्वाणं नाशं । धरोपस्थे भूपृष्ठे पिप्पलमासाद्य तूष्णीं निपसादेत्यर्थः ॥ २७ ॥ विधूमो निर्धूमः पावक इव ज्वलन्नित्यर्थः ॥ २८–३१ ॥ उरौ दक्षिणपादं कृत्वा ॥ ३२ ॥ मुसलस्यावशेषायाः खंडेन कृतेषुः ॥ ३३–३५ ॥ इतोऽपि मम वध एव श्रेयानिति भावेनाह ॥ यस्येति । विरिंचिरुद्रादयः । अस्य विरिंचस्य तनया मरीच्यादयो गिरां पतयो बृहस्पत्यादय इत्येते यस्य तवात्मयोगरचितमात्मसामर्थ्येन रचितं सृष्ट्यादिकं न विदुः । तत्र निमित्तमाह ॥ त्वन्माययेति । त्वन्मायया तव बंधकशक्त्या विहतदृष्टयः प्रलुप्तज्ञानाः । यस्मादिति शेषः । एतादृशस्य तस्य ते । असद्गतयोऽसत्स्वरूपा वय मेतत्तव चरितमंजः किं गृणीमो न किमपीत्यर्थः ॥ ३८ ॥ ३९ ॥ इच्छाशरीरिणेच्छायत्तशरीरिणा ॥४० ॥ अन्विच्छन् अन्वेषणं कुर्वन् । तं कृष्णं नाधिगम्याविज्ञाय पुनस्तुलसिकामोदो यस्य स तं वायुमाघ्रायाभिमुखं तुलसिकामोदवाय्वभिमुखं ययौ ॥४१॥ कृतकेतनमाश्रयो यस्य सः । तं स्नेहेन परिप्लुतात्मा सन् द्रवीभूतमनाः सन् ॥ ४२ ॥ दृष्टिः । भावे क्तः । दर्शनं चक्षुः । एवं च तमासि प्रविष्टा दृष्टिः प्रनष्टा नाशयुक्ताऽभूत् । पुनराह ॥ दिश इति । शांतिं सुखं । यथा निशायामुडुपे चंद्रे प्रनष्टेऽस्त

गतं दिगादिज्ञानं न भवत्येवमित्यर्थः ॥ ४३ ॥ स्वमुत्पपात स्वं प्रत्युत्पपातेत्यर्थः । सूते उदीक्षितः सतः ॥ ४४ ॥ अतिधीस्मितात्मानं सूतं ॥ ४५—४८ ॥ एतां संसृतिं मन्मायारचितां मदिच्छया रचनवतीं विज्ञायोपशमं मन्निष्ठबुद्धिं व्रज प्रापेत्यर्थः ॥ ५० ॥ इति श्रीभागवतटिप्पण्यां त्रिंशोऽध्यायः ॥ ११—३० ॥ ॥

॥ हरिः ॐ ॥ निर्याणं नाश ॥ १–३ ॥ सकुलं कुर्वतमित्यन्वयः ॥ ४ ॥ आत्मनो विभूतीः स्वसनिधानविशेषांस्तानिंद्रादीन्वीक्ष्यात्मनि मूलरूपे आत्मानं सयोज्य पद्मवद्दिप्यमाननेत्रे न्यमीलयदित्यर्थः ॥ ५ ॥ लोकाभिरामां लोकानां मनोहरां धारणाध्यानयोर्मंगलां स्वतनुमाग्नेय्या योगधारणया दग्ध्वा स्वकं धामाविशदिति प्रतीयते । न च तद्युक्तं । तृतीये स्वतनुं गृहीत्वैवांतर्धानस्योक्तत्वेन तद्विरोधः स्यादित्यत आह ॥ आग्नेय्येति । एवं चादग्ध्वेत्युक्त्याऽकारप्रश्लेषेण पदच्छेद इति दर्शितं । तथा च न विरोध इति भावः । उक्तार्थे नियामकं प्रमाणमाह ॥ आग्नेय्येति । अन्ये भगवदितरे समस्ता देवा आग्नेय्या धारणया देहं दग्ध्वा पर पदं यांति तेषां देवानामन्यां तनु मूलरूपे विद्यमानां तनुं । ताभिस्तनूभिः । कुत इत्यत आह ॥ नित्यानदेति । तथा चाग्नेय्या योगधारणया तनुमदग्ध्वा स्वकं धामाविशदित्यर्थः ॥ ६ ॥ परलोकगमनसमये पुनः किं जातमित्यत आह ॥ दिवीति । तं कृष्णमनु ॥ ७ ॥ अविज्ञातगतिं परेणाविज्ञातस्वरूपं कृष्णं तद्दृशुरित्यर्थः ॥ ८ ॥ तदेव दर्शयति ॥ सौदामिन्या इति । यथाऽभ्रमडलं भित्वा आकाशे यांत्याः सौदामिन्या गतिं मर्त्यैर्न लक्ष्यते तथा कृष्णस्य गतिर्देवतैर्न लक्ष्यते साकल्येन न ज्ञायत इत्यर्थः । योगगतिं योगसामर्थ्यं ॥१०॥ कृष्णो देह त्यक्त्वा दिवं गत इति न मतव्यमित्याह ॥ राजन्निति । अत्र तनुभृज्जननाप्ययेहामित्यस्य तनुभृतां जननमप्ययश्च तद्वच्चेष्टेत्युच्यत इति भातीत्यतोऽत्र विवक्षितमर्थमाह ॥ तनुभृद्वदिति । प्राणिवदित्यर्थः । तनुभृद्वदीहां श्रुत्यैव दर्शयति ॥ प्रजापतिरिति । जननवदीहामपि श्रुत्यैव दर्शयति ॥ अजायमान इति । अप्ययवदीहां प्रमाणेनैव दर्शयितुं स्मृत्याऽप्युक्तमर्थं दर्शयति ॥ अजात इति । अमृतोऽमृतवदित्यनेनाप्ययवदीहा प्रदर्शिता । तथा च परस्य लोकविलक्षणस्य हरेस्तनुभृज्जननाप्ययेहां गर्भेऽतश्चरणाज्जीववदजायमानो बहुधा विजायत इति कृत्वा जननवदमृत इति कृत्वाऽप्ययवदीहां चेष्टां मायाविडबनमिच्छयाऽनुकरणमवेहि । कथं । यथा नटस्याकारविशेषप्रदर्शनं मायया तथा मिथ्याभूतमेत्र

किं न स्यादित्यत आह ॥ ॥ सृष्ट्वेति । स हरिरात्मना स्वसामर्थ्येनेदं जगत्सृष्ट्वाऽनुविश्यावतारैर्विहृत्यांते सहृत्यात्ममहिमोपरतः सन् आस्ते स्वे महिम्न्यास्ते । अनेनापरिमितसामर्थ्यात्सर्वं युज्यत इत्युक्तं भवति ॥ ११ ॥ इतोऽप्येतादृशस्य देहत्यागेन गमनमिति न मंतव्यमित्याह ॥ मर्त्येनेति । यः कृष्णो मर्त्येन शरीरेण सह यमलोकं नीतं गुरुसुतमानयत् । यश्च शरणदः परमास्त्रेण ब्रह्मास्त्रेण दग्धं त्वां चानयत् । यो बाणपुरेऽतकातंकं रुद्रमपि जिग्ये । यद्वा । पारिजातहरणेऽतकांतकं यममपि जिग्ये । सोऽनीशोऽन्येशरहितः कृष्ण ईशतनौ सर्वेशानां रुद्रादीनामीशत्व तनोतीतीशतनुस्तस्मिन्स्वदेहे । मृगयोः सकाशाल्लुब्धकजराव्याधसकाशादनीश्वरः स्यात्किं न स्यादेवेति । अथो तस्मात्सामर्थ्यातिशयप्रकटनाय विप्रशापमनुस्मरन्नाविद्ध एव स्वभक्तं व्याधशरीरान्मोचयितुं शल्येषुणा विद्ध एवेति ॥ १२ ॥ तर्हि बलभद्रादीन्सदेहान्किं किमिति स्वलोकं प्राति न नीतवानिति तत्राह ॥ तथाऽपीति । तत्र कृष्णः स्ववपुः प्रणेतुं नैच्छत् किं त्वत्र शेषित । कुतो मर्त्येन देहेन किं प्रयोजनमिति कृष्णः स्वदेहमत्र परित्यज्य गत इत्युच्यत इत्यतोऽत्राभिप्रेतमर्थमाह ॥ शेषित वपुर्बलभद्रादीनामिति । तथा च कृष्णः स्वकीयं वपुः परित्यज्य गत इत्युक्ते स्वयं कृष्णादिरूपवानित्युदाहृतप्रमाणविरोध इति भावः । उक्त एवार्थ इत्यत्र नियामकप्रमाणमाह ॥ जगतो मोहनार्थयिति । मानुषी चेष्टां स्त्र्यादिद्वारा जननादिरूपां । किमर्थमित्यत उक्त ॥ मोहायेति । दैत्यानां मोहायेति । कुतः । वस्तुस्थितिरेव किं न स्यादित्यत आह ॥ माययेति । ननु वेदादौ विष्णोर्जनिमृत्यादिकमुच्यतेऽतः कथं विष्णोर्जन्मादिकं नास्तीत्युच्यत इत्यत आह ॥ जीवविष्णोरिति । तथा च क्वचित्तथोक्तिर्दैत्यानां मोहानार्थायैवेति भावः । तथा च कृष्णो यद्यप्यशेपस्थितिसभवाप्यये-ष्वनन्यहेतुः । कुलालस्य दंडादिवद्धेत्वतरवर्जितः । स्वतंत्र इति यावत् । कुतः । यदशेपशक्तिदृगिति । तथाऽपि बलभद्रादीनां वपुरूर्ध्वं प्रणेतुं नैच्छद्भगवान् । कुत इत्यत उक्त । मर्त्येन मरणशीलेन शरीरेण कि प्रयोजनमिति भावेनात्र शेपित हरिणेति । अनेनाऽपि कि प्रयोजनमित्यत उक्तं ॥ स्वस्थगतिमिति । स्वभक्तानां स्वविपयज्ञानलक्षणां योगगतिं प्रदर्शयन् । तत्प्रदर्शनमेव प्रयोजनमिति भावः ॥ १३ ॥ कृष्णोक्तः फलमाह ॥ य इति ॥ १४- १५ ॥ कृष्णोक्तो दारुकः किमकरोदिति कथाशेपमाह ॥ दारुक इति । कृष्णविच्युतः कृष्णेन रहितः ॥ १५ ॥ १६ ॥ कुत्र जग्मुरित्यत आह ॥ ब्रह्मव इति ॥ १७ ॥ स्मृतिं विजह-

विस्मरणं प्राप्ता इत्यर्थः ॥ १८ ॥ चितामारुरुहुः । सहगमनं गता इति यावत् ॥ १९ ॥ तत्रात्र वसुदेवशरीरमुपगृह्याग्निमावि-शन्नित्यन्वयः । हरेः स्नुषाः प्रद्युम्नादींस्तद्देहान् उपगृह्याग्निमाविशन्नित्यर्थः ॥ २० ॥ ननु पूर्वं रामादिपत्नीनां रामादिदेहेन सहाग्निप्रवेशमुक्त्वा कृष्णपत्न्यो विशन्नग्निं रुक्मिण्याद्या इत्युक्त्या कृष्णदेहस्याग्निदाहोऽस्तीति लभ्यते तन्न युज्यते । अर्जुनेन दग्धत्वात् । नन्वस्तु दाहस्तथाऽपि रुक्मिण्यादिदेहानामग्निना दाह इति प्रतीयतेऽत आह ॥ अग्नाविति । भैष्मी भीष्मकता रुक्मिण्यग्नावंतर्दधे सत्यभामा तु वनेंऽतर्दधे । अन्याः षण्महिष्योऽग्नौ देहं त्यक्तवंत इति भावः । तयोः रुक्मिणीसत्यभामयोः । याश्च रुक्मिण्याद्याः कृष्णपत्न्योऽग्निं विशन् अग्नावंतर्धानं प्राप्ता इत्यर्थः । कुतः । यतस्तदात्मका इति भगवदेकमनस्का इत्यर्थः ॥ २१ ॥ सदुक्तिभिः सदुक्तिरूपैर्नष्टगोत्राणां गोत्रशून्यानां सांपरायिकं परेतविषयक कर्म ॥ २२ ॥ कुत इत्यत आह ॥ नित्यामिति ॥ २३–२६ ॥ वंशधरं वंशप्रवर्तकं महापथं वीराध्वानं ॥ २७ ॥ न केवलमेतावदेव फलं किंतु फलांतरमप्यस्तीति भावेनोपसंहराति ॥ इत्थमिति । भगवतो हरेः सत्तमानि निर्दुष्टानि । अन्यत्र चेह च श्रुतान्यत्र ग्रथांतरे इहास्मिन् ग्रंथे च प्रति-पाद्यमानानि रुचिरावतारवीर्याणि रुचिराणि यान्यवतारे कृतानि वीर्याण्यस्य चरितानि बाल्यचरितानि गृणन्मनुष्यो यः परम-हंसगतौ भगवत्स्वरूपे परामत्युत्तमां गतिं लभेत प्राप्नुयादित्यशेषमतिमंगलं ॥ २८ ॥ इति श्रीभागवतटिप्पण्यामेकोनत्रिंशोऽध्यायः ॥ ११–३१ ॥ ॥ इति श्रीमद्भागवतमूलतात्पर्यविवरणे श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासतीर्थेन रचित एकादशः स्कंधः संपूर्णः ॥ ११ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥



॥ इति श्रीमद्भागवतटिप्पणी श्रीनिवासतीर्थविरचिता समाप्ता ॥

॥ एकादशस्कंधः ॥